# सिद्धार्थ-चरितम्

नाटकम्

डॉ वी हे कुमार भट्टाचार्य-प्रणीतम्





संस्कृत पुस्तक भाण्डार

Published by :
Shri Syamapada Bhattacharjee
SANSKRIT PUSTAK BHANDAR
38, Bidhan Sarani,
Calcutta-6



प्रथमं प्रकाशनम्
१८९२ शकाब्दे

वैजयन्ती-ग्रन्थमाला

पंचमसंख्या

Price :
De Luxe— Rs. 15·00
Popular— Rs. 12·00
Foreign— £ 1–5s.



Printed by :
Shri D. P. Mitra
THE ELM PRESS
63, Beadon Street,



# उत्सर्गः

परलोकगताय ड:सुबोधचन्द्रमुखोपाध्याय-
महोदयाय

आ मृत्यो र्यो नियतमकरोद्
आर्तसेवामतन्द्रं
चित्तं नृणां परुषवचनै-
र्नात्र येन क्षतं वा
धर्माचारो विषयविमुखः
सर्वबन्धुः सुबोध-
स्तस्य स्मृत्यै सुगतचरितं
श्रद्धया दीयतेऽर्घ्यम् ॥




धर्मस्तु काव्यं मम नास्ति चान्यो
वृत्तै र्हि कालं कलयाम्यतन्द्रम् ।
संव्यक्तिवादः परदर्शनं मे
सृष्टं प्रमात्रा विषयेण विश्वम् ॥




It is with not a little misgiving that I present a drama on the life and teachings of Gautama Buddha, even though this is the fifth of my six Sanskrit works written within a short period of two years. The Buddhist literature is a veritable ocean of philosophic and religious lore, while I have picked up only a few pebbles on its wave-washed shores during whatever leisure hours I could snatch over a couple of months in the midst of my rather absorbing official preoccupations. Savants are therefore likely to detect many an error of omission as well as of commission in respect of biographical details, though not, I hope, with regard to the basic tenets of Buddhism as preached by the Buddha himself.

The work was completed over a year back and it is now seeing the light of day thanks to the enviable zeal of the young proprietor of Sanskrit Pustak Bhandar, whose (—I will not say, indirect) contribution to the cause of indological learning deserves to be recorded in letters of gold. The only apology for publishing my feeble effort is my great reverence for the founder of Buddhism because of his shining personality and the wonderfully modern character of his approach to life and reality. I myself advocate a form of positivism (christened Referential Positivism), and Buddha's positivistic philosophy has always held a great attraction for me. I have sought to depict him not as an ethereal spirit encaged in a strange world but as a normal human being endowed with a penetrating intellect and yet possessing a heart only too full of the milk of human kindness. Buddha was the first and the best humanist in world-history and in this, in my humble opinion, lies the secret of his greatness as also of his claim to immortality. Siddhartha was a man of action as well as of contemplation, and this is why I have chosen the dramatic medium to delineate his life and philosophy. The work is meant to be my literary tribute to the Light of Asia, who is not our teacher but the world's. The world, torn by bitterness and strife, needs as never before the healing touch of Amitabha's gospel.



He strode our tiny planet like a spiritual Colossus, putting to shame the rituals that had become hollow and meaningless through loss of true faith—a faith that not only accepts but also inquires. And yet his message was in the best tradition of Aryan culture as the proper index to the inner spirit of Hinduism. A modern mind will find much that is still acceptable in the Buddhist interpretation of our Indian heritage.

I have indicated my indebtedness to previous authors in the Sanskrit preface and need not repeat it here. My publisher has spared no pains nor expense to make the volume elegant in respect of its get-up. My daughter Baijayanti has done the internal decorations, rather hurriedly, with her M. A. Examination in the offing. As she could not design the jacket, her inartistic father was forced to make the amateurish attempt in a field where even experts might fear to tread.

I am sorry to find that a few typographic errors have crept in despite the best attention of myself as well as the authorities and workers of the Elm Press, whose unfailing courtesy deserves more than a passing mention. I shall consider our labours amply rewarded if the volume, in spite of its various defects, succeeds in arousing, to however small an extent, a renewed interest in the eternal message of universal love preached by Gautama Buddha.

All suggestions for correction and improvement will be respectfully considered and duly acknowledged if the need for a future edition of the work arises.

Writers' Buildings,
Calcutta-1
21 May, 1970

B. K. Chatterji



## मुखबन्धः

नाटकमिदं सिद्धार्थचरिताख्यं मासद्वयेन रचितं सविनयं समर्प्यते काव्यदर्शनकोविदानां मनोरञ्जनाय। पूर्वरचिते मत्कृते नाटके कविकालिदासं शार्दूलशकटं च सहृदयै र्मनीषिभि: सादरं गृहीत एव। अतो भारतीयाग्रगण्यस्य तात्त्विकप्रेमिकस्य बुद्धदेवस्य पूतजीवनमवलम्ब्य दृश्यकाव्यं रचयितुं प्रवृत्तोऽहम्। मयैव प्रत्यक्षानुमानप्रमेयम् अध्यात्मतत्त्वं निर्देशक-संव्यक्तिवादनाम गृह्यते। हिंसाप्रमत्ते जगत्याधुनिके चामिताभमतस्यास्ति नि:संशयं महत् प्रयोजनम्। ग्रन्थोऽयं शुद्धोदनसूनो र्लोकोत्तरजीवनं तथा बौद्धमतं वर्णयति वाक्यालापकविता-सङ्गीतैर्माध्यमैः।

नाटकरचनाशैलीमनुसृत्य घटनानिर्वाचनं विहितं मया परन्तु विषयेऽस्मिन् मतभेदस्य महानवकाशो विद्यते। बुद्धवृत्तान्तविषयकं साहित्यं च विशाल-



वारिधिकल्पम् । तस्यातिक्षुद्रांशो मयाऽधीतो मुख्यतः समयाभावहेतोः । कल्पनाश्रयस्य परिधिरत्र सीमित एव । अवदानशतकम्, अश्वघोषस्य बुद्धचरिताख्यं महाकाव्यम्, सर्वदर्शनसंग्रहस्तथा आंगलभाषालिखितं राधाकृष्णस्य भारतीयदर्शनम्, आनन्दकुमारस्वामिनो बुद्धबौद्धधर्ममतं चेत्यादीनि पुस्तकानि व्यवहृतानि मया । ऋणं मम सर्वशेषोक्ताद् ग्रन्थादपरिमेयमेव । अवनीन्द्रनाथकृता वङ्गभाषारचिता नालकनाम्नी पुस्तिका च साहाय्यकमयच्छन्-मे । परन्तु नाटकेऽस्मिन् बौद्धधर्मस्य बौद्धदर्शनस्य वा बुद्धपरवर्तिनो वृत्तान्ता न वर्णिताः ।

यथा मम पूर्वतनयो ग्रन्थयो स्तथाऽस्मिंश्च कतिपयानि नववृत्तान्यवलम्बितानि स्वचिन्ताविकारपरिहारार्थम् । सङ्गीतानि च वहूनि दत्तानि नृत्तोपयुक्तानि विचित्रलयतानयुतानि । न जाने किमेतानि विद्वद्भ्यो रोचन्ते न वा । परन्तु वर्तमानयुगाभिनेतव्यं नाटकं गीतैस्तथा नृत्यैर्विना नादृतं स्यात् प्रायेण । यद्यपि मम प्रयासो विफलतां गच्छेद् युगरीते र्गर्हणं न तु प्रतिपाद्यते तेन हि ।

वर्धमानविश्वविद्यालयोपाचार्यो यादवपुरविश्वविद्यालयस्य संस्कृतविभागस्य प्राक्तनप्रधानाध्यापकः साहित्यसूरिः श्रीमद्रमारंजनमुखोपाध्यायमहोदयस्तथा दर्शनकोविदोऽध्यापकः श्रीयुतगोपिकामोहनभट्टाचार्यमहाशयो द्वावपि महद्यं प्रभूतमुत्साहं प्रादत्ताम् । रचनादोषास्तु सर्व एव मदज्ञताप्रसूता न कारणान्तरजाताः ।

तथापि काव्योपहारोऽयं रसिकविनोदाय कल्पताम् इति मे कामनोदग्रा ।

स्वल्पं ज्ञानधनं तथा विरसता सृष्टिं विकुर्यात् कवे-
रुत्तालोर्मिभयः कथं जलनिधेः रत्नानि वा प्राप्णुयाम् ।
बुद्धार्चि विकचं प्रणोदयति मे चित्तं तदर्चाकृते
काव्यार्घ्यं कुरुतां निजां परमुदं दिष्ट्याऽपि चेद्धीमताम् ॥

इति—

कलिकातायां
बुद्धपूर्णिमायां
१३७७ वङ्गाब्दस्य

विनीतस्य
ग्रन्थकारस्य




**पुरुषाः—**

| | | |
|---|---|---|
| सिद्धार्थः | ... | बुद्धदेवः |
| शुद्धोदनः | ... | सिद्धार्थपिता |
| बिम्बसारः | ... | मगधराजः |
| देवदत्तः | ... | शाक्यवंश्यो युवा |
| छन्दकः | ... | सिद्धार्थसारथिः |
| आनन्दः, शारीपुत्रः, मौद्गल्यायनः, उपालिः, अश्वजित्, सुभद्रः | ... | बुद्धशिष्याः |
| राहुलः | ... | सिद्धार्थपुत्रः |
| नालकः | ... | मुनिबालकः |
| अनाथपिण्डदः, सञ्जयः, दुर्भाषः, पुष्करः | ... | श्रावस्तीनागरिकाः |
| गोपालः | ... | गोपबालकः |

कञ्चुकी

**रमण्यः—**

| | | |
|---|---|---|
| गौतमी | ... | सिद्धार्थविमाता |
| यशोधारा | ... | सिद्धार्थपत्नी |
| सुप्रिया | ... | अनाथपिण्डदसुता |
| सुजाता | ... | पल्लीबाला |
| तरलिका, मन्दारिका, मालविका | ... | कापिलवास्तुवासिन्यः |
| पञ्चदशी, सप्तदशी, अष्टादशी, कीर्तिकुण्डला, गीतिमन्द्रा | ... | मायाकन्याः |

प्रतिहारी



# सिद्धार्थचरितम्



## प्रथमोऽङ्कः

### प्रस्तावना

सञ्जातो यः पवित्रे धरणिपतिकुले चन्द्रकान्तिक्षराज्ञो
यज्ञार्थं पशुघातं परमकरुणया यो निनिन्दाश्रु मुञ्चन् ।
सर्वार्तित्राणहेतो र्दिशि दिशि विचरन्नार्यसत्यान्यदाद् यो
ज्ञानाब्धिं सौम्यमूर्तिं निखिलनरमतं स्तौमि तं बुद्धदेवम् ।।१



(नान्द्यन्ते) सूत्रधारः ।—अभिनन्दये सम्बुद्धिसमृद्धं सुधीवृन्दम् । हिंसोन्मत्ताः साम्प्रतं जाताः सर्वे मर्त्यवासिनः । विज्ञानबलेन नराश्चन्द्रलोकं जितवन्तः परन्तु पारमाणविकै-राग्नेयास्त्रै र्वसुन्धरां चूर्णीकर्तु-मुद्यताः । अहिंसा-मन्त्रप्रचारकः शुद्धोदनसुतः शाक्यसिंह एव शरण्यः सर्वेषामधुना ।

( नेपथ्याभिमुखम् अवलोक्य )

भद्रे ! नेपथ्यविधानं किं ते सम्पन्नम् ?

(नेपथ्ये) नटी ।—भाव ! प्रतीक्षतां मुहूर्तमात्रम् । आगच्छामि सत्वरमेव ।

सूत्रधारः ।—(सस्मितम्) वसनभूषणपरिधानव्यापारे रमण्यो विलम्बसंश्रिताः का कथा रङ्गमञ्चे श्रोतृमनोरञ्जिकाया नटीमुख्यायाः । परन्तु युक्तमेतत् सर्वथा मन्ये—

राजन्ते रम्यं प्रकृतितनया वस्त्रदीना वनान्यां
नग्नाः शोभन्ते सरलशिशवो मातुरङ्के निषण्णाः ।
वल्ली पुष्पै र्वा किसलयचयै र्दीप्यते मञ्जुकान्ति-
र्वेषै र्भूषाभि र्नयनसुभगा यान्ति सर्वा रमण्यः ।।२

(ततः प्रविशति नटी)

नटी ।—(सस्मितम्) आर्य ! आगताऽस्मि तरसा । आदिशतु यथाभिलषितम् ।

सूत्रधारः ।—(विहस्य)—

समयः प्रयाति तरसा शुचिस्मिते
यदि कोऽपि कर्म कुरुते स्ववाञ्छितम् ।
विरसे तु यत्र निरतो भवेत् कृते
क्षणिकं हि तस्य तनुते युगत्रिकम् ।।३

भवतु, वाग्बाहुल्येनालम् । समागता अत्र विदग्धजनाश्चित्तविनो-दनाय । तत् केन खलु नाटकेन सभाजयामस्तान् ?



नटी ।— अभिनयवस्तुनिर्वाचनं भवत एव अधिकारः । परन्तु यदहं पृष्टा भावेन तन्ममाभिरुचिं प्रकाशयामि । हिंसाभुजङ्गा दिक्षु वमन्ति जिघांसाकालकूटम् । प्रेमावतारस्यातो बुद्धदेवस्य सुधावर्षिणी वाणी रोचते रसेप्सुवृन्दारेभ्यः ।

सूत्रधारः ।—(सस्मितम्) मयापि विचारितमीदृशम् । नान्दी च तत्स्तुति-मुखरा कृता । अथास्माभि-रुपस्थाप्यतां साहित्यसूरीत्युपाधिकेन वीरेन्द्रकुमार-भट्टाचार्येण विरचितं सिद्धार्थचरितं नाटकम् ।

नटी ।—द्वे नाटके तद्रचिते कविकालिदासं शार्दूलशकटं च सुरसिकैः सुधीभि-रभिनन्दिते । सिद्धार्थजीवनं तु नाट्यरूपदानकृते दुरूहं मन्ये ।

सूत्रधारः ।—नास्ति कारणं शङ्कायाः । ग्रन्थकारोऽयं कविदार्शनिकपदं लिप्सुरेव तर्हि तस्य बुद्धचरिताश्रयं दृश्यकाव्यं न श्रीहीनं स्यात् । शाक्य-मुनिरासीद् गरिष्ठो दार्शनिकः । हृदयं च तस्य सर्वजीवदुःख-व्यथितं जातम् । अथ स निर्वाणपथं निर्दिदेश विश्वैकान्तिकार्ति-नाशाय ।—

स्वाध्यायमग्नः सदा शास्त्रनिष्ठो
मौनं गुहान्तः श्रितो वै तपस्वी ।
मन्त्रस्य भासा चकास्ते महर्षि-
र्जीवार्तिनाशे रतो बोधिसत्त्वः ॥ ४

नटी ।—यीशुचैतन्यरामकृष्णादयो महापुरुषा बुद्धदर्शितेन पथैव चरन्तो मानवेषु प्रेमोपदेशं वितरन्ति स्म । तथापि नरैः हिंसामार्गो न परित्यक्तोऽ-द्यापि ।

आर्यमार्गश्चिरं दर्शितः सर्वथा
प्रेमसिक्तै स्तथा पुण्यचारै र्नरैः ।
नात्र पापात्मभि र्गृह्यते तद्वचो
मृग्यते केवलं कल्मषं हन्त तैः ॥ ५



सूत्रधारः ।—किमत्र चित्रं सुचरिते ! नीचैः प्रयाति प्रायेण नरमनः स्वप्रकृत्या ताडितम् ।—

ऊर्ध्वं रंहति सततं संहताऽपि वह्निशिखा
नीचै गच्छति सलिलं निःसृतं गिरेः शिखरात् ।
नित्यं सञ्चरति मनो मानवस्य निम्नपथे
कः शक्नोति सुवचनैः पाप्मनो निवारयितुम् ।। ६

तथापि प्रयोजनमस्ति महाचारित्रकीर्तनेन । अपि त्वं गायसि सुललितं सङ्गीतमेकं सभाजनस्य कर्णविनोदाय मर्मतोषणाय च ?

नटी ।— कीदृशं नु गीतं, भाव, निवेदयामि साम्प्रतम् ?

सूत्रधारः ।—बुद्धदेववन्दनमेव तोषयति सभामण्डलं विदग्धमण्डितम् ।—

हास्यरतिचापलं प्रीणयति भूयसा यौवनाश्रितं
लास्यमपि तोषणं रङ्गरुचियोषितो दृप्तचेतसः ।
दार्शनिकतृप्तये तत्त्वमथ कल्पते पारमार्थिकं
प्राज्ञरसिकाय तु प्रेमिबुधजीवनैः सृज्यते रसः ।। ७

नटी ।— ( सस्मितम् ) अत्र सन्ति तरुणास्तथा वराङ्गनाश्च । तथापि पूतचरितमेव तर्पयामि । (गायति)—

प्रालेयगिरिलसितं कापिलवास्तुकथितं
नौमि राजसदनं शाक्यवंशनृपाणाम् ।
शूद्धोदननरपतिं पुण्यकृतात्मसुरतिं
नित्यमेव शरणं रुग्णदीनजनानाम् ।।
मायामनघचरितां स्तौमि नरेशवनितां
दातुमर्थितमलं कल्पवल्लिसमानाम् ।
आर्याध्वपरिरमणं विश्वविषादशमनं
तत्प्रसूनममलं सौमनस्यमजानाम् ।।



कलभं चन्द्रदीधितिनिर्मितं
कमलं चित्रभानुकरस्मितं
संमोहनाशाय बोधिदीपं त्रिलोकानाम् ।

चिरमर्चामि गौतमनामकं
मम सौख्याय निर्वृतिदायकं
नैःश्रेयसार्थं च सर्वशोकार्तजीवानाम् ॥ ८

सूत्रधारः ।—मधुरं ते सङ्गीतं स्तवरूपमाकर्ण्य चित्रार्पितवत्तिष्ठति रङ्गः ! ( नेपथ्यागतं शब्दं श्रुत्वा )—अये ! शृणोमि करुणस्वरं तरुणकण्ठनिःसृतम् ।

( नेपथ्ये )

कष्टं भोः कष्टम् ! मृतप्राय एव बाणविद्धो मरालशावकः शोणितं वमति ।

नटी ।— भाव, को रोदिति बाष्पजडकण्ठेन ?

दुनोति कण्ठं करुणाक्तबाष्पं
दिगङ्गनानां हृदयानि सद्यः ।
सुदुर्लभं हि श्रवणं धरण्यां
सुरात्मजानां मधुवाङ्मयस्य ॥ ९

सूत्रधारः ।— युक्तमुक्तं त्वया !

अङ्के निधाय यत्नेन हंसशिशुं शराहतम् ।
आगच्छति स्वयं मन्ये सिद्धार्थः साश्रुलोचनः ॥ १०



आर्ये, यास्याव आवां स्थानमिदं परित्यज्य द्रुतचारेण ।—
(संसदं प्रति)—

अद्य हि विपुला स्नाति पृथ्वी
शोणितजलधौ क्रूरसृष्टे ।
रक्षति मनुजान् कोऽन्यशूरो
निश्चितशरणं शाक्यसिंहः ।। ११

( निष्क्रान्तौ )

—इति प्रस्तावना—



( ततः प्रविशति सिद्धार्थो बाणाहतं हंसं गृहीत्वा )

सिद्धार्थः ।—हंसशिशो ! दुःसहं कष्टमापतितं तव । समाश्वसिहि, वत्स, स्नेहशुश्रूषया निराकरोमि वेदनाम् । न करोषि कस्यापि हानिं तथापि सञ्जातस्ते शत्रुर्निर्ममः प्राणघातकः ।—

करोषि केलिं ललितां ह्रदाम्भसि
सुकण्ठरावै मुखरं भवेन्नभः ।
न तिग्मचारस्तव मानसोन्मुख
तथापि जिह्मा जनयन्ति तेऽसुखम् ।। १२



न जाने कथं हिंसां समाश्रयन्ते मानवाः कथङ्कारञ्च नृशंसा निष्पाप-प्राणिनां जीवनं हरन्ति रात्रिन्दिवम् । दुःखपूर्णं हि जगत् प्रकृति-विपर्ययात् । अतो नराणां नियतकर्तव्यं परस्परसाहाय्यं जीवमैत्री च समाचरणीया ।—

हिनस्ति नित्यं मनुजान् नृशंसो
भिनत्ति बाणै र्विहगान् पशूंश्च ।
विषादरिष्टिं जगति प्रपन्ने
शुभं प्रियं हि क्रियतामहिंसैः ।। १३

(हंसं प्रति)—मा रुदिहि, हंसपोत ! सत्वरं यास्यामि गृहं त्वत्-सेवार्थम् ।—

शङ्कां मा कुरु वत्सात्र सेविष्ये त्वां ममाश्रये ।
चन्दनपङ्कलेपेन यन्त्रणा ते गमिष्यति ।। १४

हिंसको न लभते हंसकं ममाङ्कात् । निरामयस्त्वं मुक्तनभसि विचरसि सानन्दम् । अथवा किं त्वं गृहपालितो मरालशावकः ? न जाने कुत्र वसति ते पालकः पालिका वा । कृतकतनयस्य दशामीदृशीं वीक्ष्य तु नितरां क्लिश्यते ते प्रभुः । परन्तु द्रुतमेव मन्निकेतने स्वस्थो भूत्वा स्वच्छन्दं गच्छसि स्वम् ।—

त्वरितं प्रयासि निलयात् परिमुक्तः
सरसीं वियच्च कलहंस सलीलम् ।
दुरितं न किञ्च तनुते तनुचित्ते
सरणिं सुखस्य परिदर्शय विश्वम् ।। १५

( मरालस्य क्षतस्थानं चुम्बति )

कीदृशो नृशंसः स यो हिनस्ति चीनांशुकनिर्मितमिव सुकोमलतनुं हंसशावकम् !



( ततः प्रविशति धनुर्धरो देवदत्तः )

देवदत्तः ।—हंहो सिद्धार्थ ! त्वयैव खल्वपहृतो मद्बाणविद्धो हंसकः । तदर्पय सत्वरं मामकं वस्तु मत्करे ।

सिद्धार्थः ।—महद्दुःखं बाधते मां देवदत्त ! त्वमेव तर्हि हन्तुकामो निष्पापं तथा सहायहीनं विहङ्गशिशुम् ?

देवदत्तः ।—निर्बोधं मन्ये त्वां सिद्धार्थ ! मृगया चिरेण हि राजपुत्राणां रमणीयं व्यसनम् । किमर्थं सन्ति मृग-विहङ्गादयो यदि न हन्यन्ते ते मृगयार्थिभिः ? मयाऽऽहतो मरालो मामकं द्रव्यमेव । अञ्जसा तस्य प्रत्यर्पणं कृत्वा स्वदोषं निराकुरु ।

सिद्धार्थः ।—नैष तावको देवदत्त ! जीवननाशं कर्ता चिकीर्षुं र्वा न कदापि जीव-प्रभुः । प्राणरक्षां विदधाति यः प्राणिनस्तस्यैव वित्तम् । अनार्य-माचरितं त्वया यदेतं हंसपोतं निहन्तुं प्रायतथाः ।

प्राणदो भवति कुत्र वा नरो
नाशनं किमपि निष्ठुरं कृतम् ।
रक्षकस्तदिह जीवितेश्वरो
हिंसको न लभते निजं हितम् ।। १६

देवदत्तः ।—नाहमागतस्त्वत्तो हितोपदेशं श्रोतुम् । राजसूनुरहं जीवहननाद् आनन्दं लभे सदैव । त्वामहं मन्ये प्रतीपाचारं योगिकल्पम् ।—

आनन्द एव शुभदो नियतं नराणां
सौख्यं च वेद्मि परमं द्रविणं हि मर्त्ये ।
सन्न्यासिवत्तु कुरुषे विषमाश्रयं त्वं
शुद्धोदनस्य सदने वृषलोऽद्य जातः ।। १७

सिद्धार्थः ।—क्षमस्व माम् आर्यसत्त्व देवदत्त ! देवैर्दत्तः पूतचारित्र्यगुणस्तव । अधमोऽयं जनो विपरीतवृत्तिरेव । तथापि न सहेऽहं प्राणिनां दुःखं स्तोकेनापि विशेषतो नरहस्तविहितम् । दुर्बलहृदयं मम धावति



जीवकष्टनिवारणाय। कृपया जहीहि क्रोधं शराहतं मरालशावकं च। परिचर्यया स्वस्थं करिष्यामि तं पुनरपि। देहि मे भिक्षां बन्धो !

देवदत्तः।—परस्वापहरणं गर्हितं कर्म सर्वेषां का कथा युवराजस्य !

सिद्धार्थः।—न विचारयामि सुनीतिं त्वया सह।—

गर्हितं भवतु किं वा विपरीतं
प्राणिनां मम तु सौख्यं चिरकाम्यम्।
भास्करस्त्यजति नैव स्वखरार्चि-
श्चन्द्रमाः किरति नित्यं मृदुरश्मिम्॥ १८

मन्ये प्रकृत्या क्षीणहृदयोऽहं स्निह्याम्यतो जीवमात्रे परं हि निर्वाक्ये सहायहीने विपन्ने। विलम्बेन रुधिराक्तस्य विहगस्य प्राणहानिर्भवेत्। यावद् गच्छामि झटिति भेषज-प्रयोगार्थम्। दिष्ट्या वर्द्धसे त्वं सखे !

( प्रस्थितो द्रुतचारेण )

देवदत्तः।—विसदृशमाचरति मूढमतिः सिद्धार्थः। नारीसुलभं मार्दवं न शोभते राजपुत्रे कदापि।—

पौरुषं युज्यते भूपपुत्रे सदा
स्वाधिकारः कथं रक्ष्यते दुर्बलैः।
शाक्यराज्यं कदा शत्रुवश्यं भवेद्
वीरसिंहासनं गौतमेऽधिष्ठिते॥ १९

(ध्यात्वा)—किमहं तिष्ठामि साक्षिचैतन्यवत्? शाक्यवंशः सुतरां प्रजानामभिमतः। भवतु—

मयैव मार्गितव्यं राजमुकुटं
यतो हि वीरभोग्या कृत्स्नधरणी।
स किंनृपो न शत्रुर्येन विजितः
प्रजाः सुरक्षिता वा धर्षिकबलात्॥२०



२



( पादचारं करोति पृष्ठबद्धहस्तः )

( ततः प्रविशति छन्दकः )

छन्दकः ।—अभिवादये राजकुमारम् । किमनेन पथा गतो युवराजो नः ? कुत्रापि न दृश्यते स निर्मले प्रदोषे पुष्पोद्यानचारः । भीतोऽहं सञ्जातो नासाद्य निरुद्देशं तत्रभवन्तम् ।

देवदत्तः ।—( सहास्यम् )—यो वै रथी स वै सारथिप्रवरः ! द्वावपि शङ्कापीड़ितौ कारणं विनैव । नास्ति भयस्य कारणमत्र । शिशुसदनमभि प्रस्थितः सिद्धार्थो बाष्पं विमुञ्चन्नेव क्रन्दंश्च कातरकण्ठेन ।

छन्दकः ।—( सत्रस्तम् ) कथं रोदिति प्रभुर्मम सर्वथाऽजातशत्रुः ? को ददाति दुःखं तस्मै प्रेमावताराय ?

देवदत्तः ।—( सोपहासकण्ठेन )—क्व तु अजातशत्रुनामा बिम्बसारतनयो वीरपुङ्गवः क्व च नारीहृदयः शुद्धोदनसुतः सिद्धार्थः ! साम्प्रतम् अनेनैव नृशंसेन क्लेशस्तस्य साधितः ! परन्तु न जाने किं मन्दाचरणं कृतं मया । सिद्धार्थेन राजकुलयशो निराक्रियते कुख्याति-सिद्धयर्थमेव ।—

उदङ्कसन्निभं हृदयं तु यस्य
तथोत्सफेनिले नयने कदस्रम् ।
विनाप्तकारणं विषमं ह्यजस्रं
धिगीदृशं कृतं कुलपांशु तस्य ॥२१

छन्दकः ।—क्षम्यतां दासोऽयं भवता । न कदाप्यायुष्मान् सहते जीवदुःखम् । आ जन्मनः पेलवं हि तस्य मर्म परन्तु किं तदवद्यं कदाचन ? गर्हितं च न सम्भवति युवराजे । तत् कथं भवतो विरागः सञ्जातः ?

देवदत्तः ।—उद्विग्नमना अहं सिंहासनस्य भविष्यं विचिन्त्य सिद्धार्थे खलु राज्याभिषिक्ते कालेन ।—



संशोभन्ते खरवरशरा राजपुत्रस्य हस्ते
हन्याच्छत्रून् समरकुशली यौवने यः प्रबुद्धे ।
बाणैर्विद्धं विहगमपि स प्रेक्ष्य रोरुद्यमानो
याति क्लेशं यदि वनपथे का गतिस्तस्य युद्धे ।।२२

छन्दकः ।—कुतः प्राप्तस्तेन शराहतो विहङ्गमः ?

देवदत्तः ।—मयैव विद्धो हंसशिशु स्तडागतटे । अनार्यमाचरितं सिद्धार्थेन यत् स हंसमपहृत्य स्वभवनं प्रातिष्ठत !

छन्दकः ।—भृशं स्निह्यति देवः कातरे जने जीवमात्रे च । अतस्तेन गृहीतो हंसको नूनं शुश्रूषार्थमेव ।

देवदत्तः ।—अपि त्वं तस्य रथधुरं विहाय पृष्ठगोपो जातो गर्हितकर्मणि ? पुरा किल दशरथस्य बभूव सारथिः सुमन्त्र उपदेष्टृकल्पः । त्वमप्यधुना मन्त्रकः सिद्धार्थस्य भयवित्तस्य ।

छन्दकः ।—सत्यसन्धो नृपतिरासीद् दशरथः कोशलराजः । शाक्यवंशश्च सौरकुलोद्भूतो भवताम् । न निन्दयतां स्वपितृपुरुषस्त्रेता-युगस्यापि ।

देवदत्तः ।—स्त्रैणस्य तस्य परिणामो भयङ्करो लब्धः । पुत्रशोकेन स प्राणांस्तत्याज निन्दयित्वा नियतिम् ।—

स्त्रैणं पुरुषाणां त्याज्यं ननु नित्यं
भूपो युवराज स्तादृङ् नरनिन्द्यः ।
मेषायत उक्षा किंवा न मृगेन्द्रः
शक्ति र्हि विमूर्ता सिंहासनलक्ष्मीः ।।२३

छन्द्रकः ।—पुण्यश्लोकस्य दशरथस्य तद्विधः परिणामस्तु मुनिशापात् सञ्जातः । कस्यचिदन्धमुने स्तनयं स शब्दभेदिशरेण जघान प्रागेव ।

देवदत्तः ।—अतो बाणक्षेपकं मां दशरथस्य गतिं किं प्रापयसि, मन्दबुद्धे ?



छन्दकः ।—कथमीदृशं रूढवचनं भणसि, राजपुत्र ! सिद्धार्थसारथि नं कस्यापि दुर्गतिं समीहते ।—

शिलीमुखाः स्यु र्निशिता अरुन्तुदा-
स्तथा वचांसि प्रखराणि हन्त नः ।
न राजपुत्रे परुषं तु युज्यते
करोतु वाक्यै र्जनहर्षमेव सः ।। २४

देवदत्तः ।—त्वमपि मामुपदेशं दातुं प्रक्रमसे ? नाहं सिद्धार्थवद् अवर-जनेभ्यो नीतिज्ञानं गृह्णामि । नूनं राज्यहीनो भवति सिद्धार्थो नीचसखा ।

छन्दकः ।—सिद्धार्थस्य महाभागस्य राज्यं विशालं तिष्ठति जनमनसि ।—

विपुला धराऽपि महते न रोचते
क्रियते न तेन यदि दीनपालनम् ।
प्रकृतिव्रतस्तु सुचिराय गौतमो
निखिलं तनोति शुचि तस्य शासनम् ।। २५

देवदत्तः । —न करोमि कालक्षेपं त्वया सह वागाडम्बरे ।—

सिद्धिहानिं करोत्येव सिद्धार्थो नित्यकर्मभिः ।
तच्चारतिमिराच्छन्ना शुद्धोदनस्य कीर्तिभाः ।। २६

(द्रुतं निष्क्रान्तः)

छन्दकः ।—राजपुत्रो देवदत्तो न जानाति हिताहितयोः प्रभेदम् । निन्दति च कर्कशरसनवा तमेव यो नियतमनिन्द्यः पूतचरित्रः । –

असम्मतं भवति सदैव निन्दनं
विषं पुनो वमति सतां हि कर्णयोः ।
मुदं प्रभो र्गुणकथनं करोति वेद्
व्यथां परां जनयति हिंस्रदूषणम् ।। २७



(ततः प्रविशति बालिका सुप्रिया)

सुप्रिया ।—राजसारथे ! अपि दृष्टस्त्वया सुवर्णमण्डितचञ्चुः कश्चिद् हंसशावकः ?

छन्दकः ।—दारिके, नाहं दृष्टवान् कमपि मरालशिशुम् । परन्तु देवदत्तस्य बाणेन हंस एक आहतः ।

सुप्रिया ।—(क्रन्दन्ती) स भवति नूनं ममैव विहङ्गकः । कुत्राधुना तिष्ठति सः ?

छन्दकः ।—युवराजेन प्राप्तः स महता यत्नेन च सेवितः । सत्वरमेव विशल्यो भविष्यति । कुत्रासीत् स हसवराकः ?

सुप्रिया ।—कुवलयतडागे क्रीडन्नासीत् स सङ्गिहीनः । न जाने कथं स देवदत्तेन निष्करुणेन विमर्दितः । कमपि न हिनस्ति हंसशिशुः ।

छन्दकः ।—मा गमः कातरत्वं कोमले बालिके ! हिंसोन्मत्ताः खलु बहवो मर्त्यवासिनः । हेतुं विना हि हिंसति घ्नन्ति च नरानपरांस्तथा निर्दोषजीवान् ।

सुप्रिया ।—किं नास्ति उपायः खलहस्ताद् जीवरक्षायाः ? नरकसदृशी जाता पृथिवी पापाचारहेतोः !

छन्दकः ।—यद्युपायो वर्तते तं जानाति युवराजः सिद्धार्थ एव । हृदयं तस्य क्रन्दत्यनिशं जीवार्तिदर्शनात् । स एव क्षमो वसुधां त्रिदिवतां नेतुम् ।—

अखिलजगति सत्यासत्ययोः स्याद्विवादः
प्रभवति खलु संख्ये मानवः पुण्यकर्मा ।
नरकरतिविमुग्धा यान्ति नित्यं धराऽधो
रचयति वसुमत्यां स्वर्गखण्डं सुधर्मा ॥ २८

सुप्रिया ।—मधुरं वचनं तव सारथिश्रेष्ठ ! परन्तु त्वत्कथितायाम् अमरावत्यामपि न यामि तृप्तिं हंसशावकहीना सुप्रियाऽहम् ।



छन्दकः ।—अर्भके सरले ! एह्येहि मया सार्धम् । सद्यः प्राप्स्यसि तव प्रियं मरालपोतं निरामयम् ।

सुप्रिया ।—(हर्षेण नृत्यन्ती) सत्वरं गच्छामि वत्ससमीपम् । (गायति)—

शिञ्जिनीपरिहित वाञ्छितमराल
पद्मिनीविलसित कुञ्चितमृणाल
त्वमसि मर्मसरसि मम प्राणरत्नम् ।
निष्ठुरप्रदलित मुह्यसि वराक
बन्धुसाधितहित गच्छति विपाकः
सपदि सञ्चरसि हि दिगन्ते सयत्नम् ।
तपनदीप्तनभसि गृहं तेऽसपत्नम् ॥ २९

छन्दकः ।—अहो ! अमृतं बालभाषितं तथा बालिकासङ्गीतम् । वत्से, पदं निधेहि युवराजसद्मवर्त्मनि । वाञ्छापूरणं ते भविष्यति अचिरेण ।—

नियुज्यतामवनक्रतेन सुप्रिया
वदान्यता नृपतिसुतस्य शंस्यताम् ।
अहर्निशं भवतु च सूतजन्म मे
सुसार्थकं प्रभुरथरश्मिचर्यया ॥ ३०

इत इतः सुप्रिये चारुदर्शने !

( निष्क्रान्तौ )

इति प्रथमोऽङ्को हंसरक्षणं नाम





# द्वितीयोऽङ्कः

( पर्यङ्कशयानः शुद्धोदनः )

शुद्धोदनः ।—(सनिःश्वासम्)—न जाने किं मे सुतः सर्वार्थसिद्धः संसारवासं करिष्यति न वा । तज्जन्मनः प्राङ् महादेवी माया स्वप्नेऽपश्यत् चन्द्रकरनिर्मितः करभको नृत्यचारेण तस्या उत्सङ्गं प्रविवेश इति । कुमारस्य तनुश्च कुसुमकोमला कौमुदीमती सञ्जाता । अचिरेण महादेव्यां स्वर्गतायां मातृष्वसा देवी गौतमी पुत्रवत् सिद्धार्थं पालयामास । दिने दिने चन्द्रकलेव परिवर्धमानः सन्तानः शैशवमतिक्रम्य



कैशोरमुपनीतः। परन्तु जीवदुःखदर्शनात् शिशुवत् क्रन्दति स क्रीडनकवञ्चित इव। सन्नयासाशङ्कया तस्य परिणयो सम्पादितो मया कैशोर एव ज्ञातिकन्यया साकम्। स्नुषा यशोधारा चालोकरूपलावण्यसम्पन्ना विदुषी सर्वगुणान्विता तरुणी। द्वयोस्तयोः प्रणयः सुमधुरः परस्परश्रद्धामण्डितः। पौत्रो राहुलः स्नेहपुत्तलः हरगौरीकुमारः कुमार इव। तत्कोमलकरश्च स्वपित्रो दाम्पत्यबन्धनं द्रढयति प्रतिदिनम् अलक्ष्यतन्तुना। तथापि महती शङ्का बाधते मामहर्निशम्। देवी गौतमी च रोदिति कृतकतनयस्य वैरागलक्षणं दृष्ट्वा। यौवराज्य अभिषेकेणापि न वर्धते तस्य शासनकर्माभिरुचिः। मन्य एष पुरुषो न जातो गार्हस्थ्यसाधनाय परन्तु कैवल्यसिद्धये। कुमारे प्रव्रजिते तु प्राणांस्त्यजामि तुषानले दावदाहे वा। किं करोमि क्व गच्छामि मन्दभाग्यः!

( उत्थाय पादचारं करोति )

हा नियतिपरिहासम्!—

सौवर्णे पिञ्जरे यो विलसति भृशं दिव्यः शुकशिशु-
र्भोज्यैः पानैः सुतृप्तो दिनपरिकरे क्रीडां कलयते।
शिञ्जातालेन नृत्यन् वचनमुखरः प्रीणाति हृदयं
मुक्तद्वारे तु लब्धे नभसि डयितुं चेष्टेत स रहः॥ ३१

तथापि किं कर्तव्यं मया?—

पितृभ्यां केवलं कार्यं सन्तानानां सुपोषणम्।
काले काले वयःप्राप्ताः स्वाभिमतं चरन्तु ते॥ ३२

( ततः प्रविशति गौतमी राजमहिषी )

शुद्धोदनः।—आयाहि देवि गौतमि! उपविश स्वच्छन्दम्। का तु वार्ता सर्वार्थसिद्धस्य?



(उपविश्य) गौतमी ।––महान् खलु भारोऽर्पितो मत्स्कन्धे स्वस्रा महादेव्या मायया। शैशवात् प्रभृति स्नेहप्राचुर्येण पोषितः सिद्धार्थो मामेव जानाति स्वजननीरूपां श्रद्धायुक्तश्च स्निह्यति मयि परमम्। निजनन्दनो नन्दः दूरीकृतो मया स्नेहविषये कृतकपुत्रस्य सिद्धार्थस्य कृते।

शुद्धोदनः।––(सस्मितम्)—किमत्र चित्रं देवि !

नृणां सन्तानं हि प्रकृतिनियमात् स्निह्यति स्वजनन्यां
न रुष्टायां तस्यां निजतनुभवा यान्ति मातुः प्रतीपम्।
परं धात्रीकल्पा प्रणयकवचैश्चित्तमाप्नोति तेषां
विजानीहि प्रायः कृतकतनयं भूयसा प्रेमभाजम्॥ ३३

गौतमी।––(सस्मितम्) गौतमो मे निजनन्दन एव। न जाने कथङ्कारं मां त्यक्त्वा यास्यति वानप्रस्थं स यौवने। तथापि कम्पते मे हृदयमनिशम् अशुभशङ्कया। पत्नी तस्य प्रणयपुत्तली पुत्रश्च नयनस्य मणिः। पितरं च वन्दते स मर्त्यदैवतमिव श्रद्धापूर्णमानसः। परन्तु यदि सन्न्यासं ग्रहीतुं चेष्टते तदहं न माध्यस्थ्यम् अवलम्बे।—

आ शैशवान्मया यत्नेन पोषितः
संसारकानने कल्पद्रुमो हि यः।
पुष्पैः फलैर्गते तस्मिन् स्थलान्तरं
संशोष्यते मम प्रेम्णश्च निर्झरः॥ ३४

शुद्धोदनः।—(सनिःश्वासम्) कथं महीरुहः शक्नोति स्थानान्तरं यातुम्? एष नास्माकं वाञ्छाकल्पतरुः स्नेहसेवितस्तु मायानन्दनो मायामृगः।—

लब्ध्वा कम्रां कलभकतनुतां चन्द्ररश्मेश्चयो यो
मातुर्गर्भं प्रविशति तनयः स्वैन्द्रजालप्रभिन्नः।



कीर्तिं मर्त्ये यदपि स तनुते शाक्यवंशावतंसो
मन्ये त्रस्तं हृतविषयरतं चित्रमायामृगं तम् ।। ३५

गौतमी ।——मायामृगस्तु कल्पते सर्वेषां नितान्तदुःखायैव । बद्धुं शक्तः कस्तं स्नेहरज्जुना ?—

नयनसुभगः स्वर्णद्युत्या प्रधावति रंहसा
रमयति मनो ग्रीवाभङ्गैस्तथैव स लम्फनैः ।
सपदि कुरुते लोलापाङ्गै मुनीनपि मूर्छितान्
न खलु हरिणो मायावी स्याद् धृतः प्रणयेप्सुना ।। ३६

शुद्धोदनः ।——तथापि चेष्टेऽहं सर्वार्थसिद्धं संसारपाशेन बन्दीकर्तुम् । सर्वदा गृहस्थितः स न भवति भूयोदर्शी । वैचित्र्यं च जनयति मानसे रम्यचारतृष्णाम् । दुःखदैन्यचिह्नान्यपावार्य दर्श्यंतां स मञ्जुलोद्यानानि चारुतमवर्त्मनि तथा दृष्टिसरसानि तुङ्गहर्म्याणि । पथिचारेण नूनं यास्यति स परमां तुष्ठिम् ।—

स्मितोद्यानं नित्यं विकचकुसुमै र्नन्दयतु तं
मनोज्ञा सोल्लासै र्जनगणरवै रस्तु सरणिः ।
सुरम्यः प्रासादो जनयतु मुदं सञ्चितमणिः
समन्ताच्छ्रीचिह्नं परमपुलकं नेष्यति सुतम् ।।३७

गौतमी ।—प्रथमः कल्पः ! पुत्रवधू र्यशोधारा च सर्वथा यतते स्वामिमनोरञ्जनाय रात्रिन्दिवम् । उद्भिन्नयौवना सा किशोरी विधेरनवद्याकृतिः । पत्नीव्रतश्च सिद्धार्थो निरन्तरं तथापि तस्य संसारविरागो जात इत्येव विचित्रम् !

काम्योपभोगहेतोर्हि शान्ता सिद्धार्थकामना ।
सञ्जातस्तु विरागोऽत्र रागस्य चरितार्थकः ।। ३८



शुद्धोदनः ।—तत् कथं वदन्ति महाजनाः कामानामुपभोगेन कामो न शाम्यति परन्तु परिवर्धते हविषा चित्रभानुरिवेति ? अपि च—

न यदा मदनो जनयेन्मदं
रमयते रमणी न पतिव्रता ।
तरुणो मनुते विषयं विषं
प्रकृतिरत्र तदा विकृतिं गता ।। ३९

( ततः प्रविशति यशोधारा )

यशोधारा ।—प्रणमामि कृताञ्जलिः पितरौ ।

गौतमी ।—जाते, अपि कुशलिनी त्वम् ?

यशोधारा ।—अम्ब, पतिपुत्रयोर्मङ्गलमेव कलते मम कुशलाय । कीदृशी पितुः शरीरवार्ता ?

शुद्धोदनः ।—वत्से, वार्धकोपनीतस्य नित्यमेव मे शारीरशल्यम् । परन्तु न तथा क्लेशयति मां स्वार्तिर्यथा स्नेहाधाराणां मामकानां वैक्लव-चिन्ता । कुत्र वर्तते सूनुस्ते लोचनलोभनो हृदयपुत्तलो राहुलः ?

यशोधारा ।—धात्रीपुत्रैः सह क्रीडन्नास्ते अलिन्दसंलग्ने क्रीडाशैले स्वर्णकन्दुकेन । लपति च सखिभिः समं भृशमनन्यमनाः ।

गौतमी ।—हा राहुल शाक्यकुलनिधे !

यशोधारा ।—कथमेवं भणति माता ? हर्षमग्न एव वंशतिलको निर्विघ्नश्च ।

गौतमी ।—भविष्यं विचिन्त्य वदामीदृशम् । महाराजे वानप्रस्थं गते को लालयति बालकं रक्षति वा तम् अरातिकवलात् ?

शुद्धोदनः ।—शान्तं, गौतमि ! न जानाति कन्यका शङ्कायाः कारण मावयोः । ऋजुमति र्यशोधारा अद्यापि भवेद् अप्राप्तसंसारज्ञाना ।—

न शीतांशुर्वेत्ति प्रतिपदतिथौ राहुमथनं
क्व वा शङ्काव्यालं परिगणयते बालहरिणी ।
यशोधारा कन्या सरलमतिरद्यापि तरुणी
न जानीते दुःखं विषमजनितं भाग्यदशनम् ।। ४०



गौतमी ।—न भयं समुपस्थितं अधुनाऽपि । परन्तु भयकारणं नूनं विद्यते । अतः प्रतीकारः सद्य एव करणीयः सर्वथा । ( निरीक्ष्य ) कथं पुत्री साश्रुनयना ? अस्मद्भीतिहेतु स्तर्हि त्वया चानुमितः ।

यशोधारा ।— मन्दभागाऽहं न भूता मन्ये आर्यपुत्रस्य चित्तचारिणी । स्वल्पविद्या धर्मज्ञानरहिता च राहुलजननी वराकी !

शुद्धोदनः ।—कन्या मे विदुषी धर्मात्मजेव च पुण्यशीला सर्वमनोरञ्जिका । नास्ति दोष स्तव स्तीकेनाप्यत्र । मत्पुत्रेणैव समाश्रितम् अकाल-वैरागम् ।—

तरुणवयसि नित्यं दुर्मदा राजपुत्राः
समरनिपुणतार्थं यापयन्ति स्वकालम् ।
विषयरतिविमुग्धा भोगमात्रे रमन्ते
चरति तु विपरीतं हन्त सर्वार्थसिद्धः ।। ४१

गौतमी ।—दयार्द्रचित्तः सिद्धार्थः सुतरां सिद्यति सर्वजीवेषु । हर्षोत्फुल्लं मानसमपि तस्य विषादं गच्छति कस्मिंश्चिदपि दुःखे सहसा नयन-पथमागते । चिन्तामग्नश्च तिष्ठति स सर्वार्तिहेतुनिराकरणार्थम् । न तस्य विरागो भोगद्रव्यमात्रे परन्तु भोग्यस्य क्षणस्थायित्वाद् दोषान्तराद्वा । नृपतयश्च प्रजाजनस्य विपत्तिनाशं कर्तुं शक्नुवन्ति । अतो न वर्तते कारणलेशोऽपि संसारपरिहारस्य ।

शुद्धोदनः ।—न शक्नोति भूपति र्मानवानाम् आत्यन्तिकं दुःखलयं विधातुम् अपवर्गफलं दातुं वा । परन्तु सर्वार्थसिद्धो यदि विश्वकैवल्यहेतवे वैराग्यमाश्रयते तन्मम क्लेशसिन्धु र्जायते निरवधिः ।—

निखिलनरगणस्य सम्पद्यते यत् शुचेः संक्रमो
निजनियतिवशात्तु कुर्वीत तन्मे मनो विक्लवम् ।
रमयति यदि चन्द्ररश्मिरपास्य क्षपाया स्तमो
रुचिरनलिनमर्म नाराचतीक्ष्णो भिनत्ति ध्रुवम् ।। ४२

( ततः प्रविशति प्रतिहारी )



प्रतिहारी ।—विजयतां भट्टारकः ! वन्दे च भट्टिन्यौ । कुमारो राहुलो मातृक्रोड़ं प्रार्थयते । किं स आनीयतामत्र ?

यशोधारा ।—गच्छामि स्वयमेव यावत् । अनुमतिं याचे, अम्ब !

गोतमी ।—याहि वत्से सत्वरम् । चञ्चलं बालकं सान्त्वयस्व । स्नेहपाशेन बधान च भर्तृनन्दनौ चिरमात्मसद्मनि !

प्रतिहारी ।—इत इतो देवि !

( सप्रतिहारी निष्क्रान्ता यशोधारा )

शुद्धोदनः ।—भाग्यं फलति सर्वत्र न पुण्यं न च पौरुषम् ! परन्तु यज्ञकर्मणा कदापि ग्रहवैगुण्यं निराकर्तुं क्षमो जन इति श्रूयते । तद् गुरुनिर्दिष्टं यज्ञं सम्पादयितुं प्रक्रमे ।

गौतमी ।—यज्ञार्थं पशुवधं न बहु विगणयति सिद्धार्थः ।

शुद्धोदनः ।—किमहं सर्वं स्वधर्मकृत्यं जहामि पुत्रेच्छाया हेतोः ।—

काङ्क्षयते क्रतु र्मया सुतस्य सौख्यसाधनो
नित्यमार्यकर्मणा मतं स्वधर्मपालनम् ।
वेददर्शिताध्वना व्रजेच्च शाक्यनन्दनो
नास्ति पुण्यचारिणः कदापि दुःखकारणम् ।। ४३

( ततः प्रविशति द्वारोपान्ते कञ्चुकी )

कञ्चुकी । (आत्मगतम्)—

रीत्या जीवानां वार्धकं मेऽद्य लब्धं
क्षीणीभूतं हि ज्ञानकर्मेन्द्रियौजः ।
प्रारब्धं मर्त्यैः शक्यते नापकर्ष्टुं
राज्ञः सेवायायस्तु मे प्राणयज्ञः ।। ४४

( प्रविश्य कक्षं प्रकाशम् )—वन्दे भूदेवं देवीं च !



(शु)द्धोदनः ।—किं वदत्यार्यो मातरिश्वा ?

(क)ञ्चुकी ।—महाराज ! दर्शनं प्रार्थयते सर्वार्थ.......(क्षणं विरम्य)—युवराजः ।

(गौ)तमी ।—(सस्मितम्)—सर्वार्थसिद्ध इत्येव शोभते भवन्मुखे नियतं कञ्चुकीवर्य !

(क)ञ्चुकी ।—संवर्धितोऽहं सदैव युवराजेन सिद्धार्थेन तथा च तस्य पित्रापि आ बाल्यतः ।—

रम्योऽस्ति बाल्यात् खलु पारिजातो
राज्ञश्च पुत्रः सततं सुशीलः ।
स्नेहं प्रभूतं वितरेज्जनेषु
भ्राम्येत् प्रतीपं न स वंशरीत्याः ।। ४५

दिष्टया वर्धते राजेन्द्रसूनुः सर्वप्रीतिदायकः ।

शुद्धोदनः ।—प्रतीक्षेऽहं पुत्रदर्शनार्थमिति विज्ञापयतु सर्वार्थसिद्धम् ।

कञ्चुकी ।—यदाज्ञापयति देवः !

(प्रस्थितः श्लथचरणः)

गौतमी ।—शाक्यावरोधे जीवनमतिक्रान्तं कञ्चुकिनो मातरिश्वनः । स्वनियोगं यत्नेन साधयते स्थविरप्रायोऽपि ।

शुद्धोदनः ।—(सस्मितभ्) अथ किम् । कैशोरादप्यहं पश्यामि तं कञ्चुकिरूपेण परन्तु यौवनकाल एव नियुक्तः स अस्मिन् कर्मणि ।—

वार्धक्यं न पीडयति जनं कर्मोद्युक्तं
मन्ये विप्रं विश्रमरहितं सायं प्रातः ।
तन्द्रारिक्तो वाङ्मयकृपणो हर्षोत्फुल्लो
राजद्वारे तिष्ठति पुरुषो धर्म्यापीडः ।। ४६

ईदृशः परिजनो नृपनिकेतस्य गौरवमेव ।

(ततः प्रविशति सिद्धार्थः)



सिद्धार्थः ।—वन्दे मातरं पितरं च ।

गौतमी ।—वत्स, दिष्टया वर्धस्व नित्यम् ! किं ते सर्वाङ्गीणं कुशलम् ?

सिद्धार्थः ।—अथ किं मातः ! पित्रोः पुण्येन स्वस्थ स्तिष्ठति सदैव सिद्धार्थः । परन्तु हृदयं क्षुभ्नाति नियतं जीव-दुःखदर्शनात् ।

शुद्धोदनः ।—उपविश वत्स ! अस्ति मे विशेषवक्तव्यम् ।

( तथा कृत्वा ) सिद्धार्थः ।—आदिशतु सेवकम् ।

शुद्धोदनः ।—( सनिःश्वासम् ) यौवराज्ये मयाऽभिषिक्तः पुत्रस्त्वं महता शुभाशाप्रकर्षेण । वानप्रस्थमवलम्बेऽहं नातिविलम्बेन । राज्यभारः कृत्स्न एव मयाऽर्पिष्यते तवांसे यौवनदृप्ते । इत्यर्थं सम्यङ् प्रस्तुतिः कार्या त्वयैव सत्वरम् ।—

राज्ञः कार्यं धरण्या मतिशयकठिनं तुल्यं स्याद्विष्णुनो
धर्माचारो नयार्चा प्रकृतिसुखविधि श्चारीणां सञ्जयः ।
कर्तुं शक्नोति धुर्यः कथितमिह मया पुण्यात्मा यः पुनो
व्यर्थेहो यः प्रतीपं कथमपि विगतो मूर्तो वंशक्षयः ॥ ४७

सिद्धार्थः ।—(सस्मितम्) पितुराज्ञा सदैव मया शिरसि धार्या । मह्यं तु रक्तक्षरो विग्रहो न रोचते । परन्तु नरमात्रस्य श्रेष्ठरिपवः कामक्रोध-लोभादयस्तेषां जयश्च कल्पते विश्वहिताय सर्वसुखार्थमपि ।

शुद्धोदनः ।—वत्स, इन्द्रियादे र्दमनमेव तर्कयामि न तु संहारम् । अनुभूतिहीना मनुष्या अपवर्गलब्धुकामा अपि गच्छन्ति जडत्वं न तु वैरागम् ।

ऋषि र्भवति संयमी न खलु चित्तकुण्ठो जडो
न षड्रिपुचयो नृणां जनयति स्वतश्चाशुभम् ।
तुरङ्गमपि रश्मिना नयति वश्यतां सारथि-
स्तथैव चपलेन्द्रियं विजयते न हन्ति प्रभुः ॥ ४८

सिद्धार्थः ।—हिंसाविद्वेषौ मन्येऽहम् एकान्तगर्हितौ अतो नित्यपरिहार्यौ निःशेषेण । कर्मणा मनसा वा जीवहिंसनं सर्वेषामेव वर्जनीयम् । न समुचितं मया पितु र्महाराजस्य वचनस्य खण्डनाय चेष्टनम् ।



शुद्धोदनः।—नाद्यापि त्वं विचारमूढो बालकः सर्वशास्त्रेषु च वैदग्ध्यं तव सुविदितम्। अतो नूनं त्वया स्ववक्तव्यं प्रकाशनीयमेव। तथापि वत्स विचारणीयमेतच्च नृपतिः शुद्धोदन आर्यसंस्कृतेः पालको लोकसंग्रहार्थमिति। वेदनिर्दिष्टविधे र्हेतो र्यज्ञार्थं पशुहननं न केवलमगर्हितम् अपि तु कर्तव्यमावश्यिकमेव। हननमात्रं न त्याज्यं न निन्दनीया जिघांसा वा।—

मेधार्थमेव सृष्टाः पशवस्तु पृथ्व्यां
स्वर्गं प्रयान्ति नूनं निहताः ऋतौ ते।
मन्येऽध्वरेषु हत्या विदधाति पुण्यं
यज्ञार्थघातमार्यो गणयेन्न घातम्॥४९

ऋषिभि स्त्रिकालज्ञैः रचितान्यस्माकं शास्त्राणि। तेषां निदेशो निःसंशयं पालनीयः प्राकृतजनैः क्षीणबुद्धिभिः।

सिद्धार्थः। (सगद्गदम्)—मन्दधीरहं न जाने धर्मस्य तत्त्वं यन्निहितं गुहायाम्। परन्तु पितृदेव वेदाः खलु विभिन्नाः स्मृतयश्च तथैव। मतभेदस्यास्ति अवकाशो यतो भिन्नमता हि मुनयः। अपि च, मम हृदयमनिशं जल्पति प्राणनाशो न कर्तव्य स्तेन यो न कदापि निर्वाणप्रायं जीवनप्रदीपं प्रोज्ज्वलयितुं शक्नोतीति। एष खलु विचारविषयः। अत्र तु धीशक्तिविचारणं नाद्वैतं पन्थानं निर्दिशति। हत्यामात्रमेय नृशंसं कर्म शोणितपातश्च मर्मदाहं वर्धयति नितरां वायुर्यथा कृशानुम्। यत् शास्त्रं हननं प्रशंसयति तदशास्त्रीयमेव सनातनम्!—

जन्तूनामपि सन्ति युग्मपितरौ भार्यापतिसुता
मुह्यन्ति प्रखरास्त्रघातजनितैः क्लेशैरिह ते।
मिथ्यातः खलु कल्पनाविरचितैर्लोकै र्विलसनं
हत्या नित्यविगर्हिता तनुभृतां शास्त्रोक्तिरनृता॥५०

क्षम्यतामभाजनस्य मे वचनोच्छ्वासो जीवार्तिदर्शनास्यारुन्तुदस्य हेतोः।



गौतमी ।—हा हन्त ! भृशं शोकविह्वलो वत्सः ।

शुद्धोदनः । ( विचलितम् )—कथमेतत् सर्वार्थसिद्ध ? किमहं न जानामि ते मर्मतापं वत्स ? तथापि वाच्यं मया यद् ज्ञातं शास्त्राध्ययनाद् विचारणाच्च । न लौकिकसुखं कल्पते नैःश्रेयसाय न च दैहिक-यन्त्रणा चित्तपीड़ा वा सर्वथा निन्दनीया तथाऽवाञ्छनीया ।—

न भवेत् सदैव सुखदं तनुभोग्यं
लभते सुखात् क्व मनुजः सुरलोकम् ।
न च दैवतै र्हि परमा गतिराप्ता
महदश्रुसिक्त उदयश्चिरमुक्तेः ॥५१

कथमतस्त्वं दुःखमात्रं श्रेयःपरिपन्थि मन्यसे ?

गौतमी ।—अहमपि वक्तुकामाऽस्मि किञ्चित् । निसर्गजातं दुःखपुञ्जं प्रायेण न नरै र्निवारणीयम् । अतस्तन्न प्रभवति कैवल्यलाभ-विघ्नाय । परन्तु मानवेषु तथा जीवान्तरेषु नरहिंसा न कदापि श्लाघनीया ।

सिद्धार्थः ।—अपि च मातो धर्मच्छद्मना यः पापाचरणं करोति निजस्वर्ग-कामनया च प्राणिनिधने विलसति स पामरः सर्वथा वर्जनीयो नृसमाजे ।

शुद्धोदनः ।—सिद्धार्थ, नाहं प्राक्तनान् महाजनान् अवजानामि । त्वं खलु यज्ञविधेः श्रुतिजातं निन्दसि स्वर्गं च मायापुरं मन्यसे देवांस्तथाऽ-लीकपुरुषान् गणयसि । कुतः प्राप्ता त्वयेदृशी ध्रुवा विद्या धारणा वा ? विद्या तु ददाति विनयं न कदापि पण्डितम्मन्यताम् अनादरं च पूजार्हाणाम् ।—

भवतु जगति मे सुतो नयपण्डितो
दिशि दिशि किरतां यशश्च स भास्वरम् ।
नृपकुलतिलकश्चिरं विनयं श्रितो
न कमपि गणये वरं मनाङ् नरम् ॥५२



सिद्धार्थः ।—पितृदेवः क्षमतां मामधमम् । नाविनय आश्रितो मया तर्कच्छलेनापि । को जानाति देवतानामस्तित्वं तासां चरितं निवासं वा ? देवलोकप्राप्तैं नं पुनरागम्यते मर्त्यधाम । अथामरालाभो न प्रत्यक्षविषयस्तस्य वर्णनं च प्रमाणासिद्धम् । आपातःसत्यम् आप्तवाक्यं तु न सर्वत्र ग्राह्यं वैचित्र्यकारणाद् विरोधहेतोश्च ।—

प्रत्यक्षं सगुणं प्रमाणमिह नः सिद्धानुमानान्वितं
नाप्तोक्तं नियतं विरोधसहितं ग्राह्यं ध्रुवान्वेषिणा ।
वेदा न स्मृतयो दिशन्ति सकलं कृत्यं तथावश्यिकं
क्वात्मानं विकरोति मन्दचरितैः संस्कारमुक्तः सुधीः ॥५३

शुद्धोधनः ।—अपौरुषेया वेदा न कदापि संशयविषयाः । मन्त्रद्रष्टृभिस्ते प्रकटिता देवभाषया । ईश्वरेणैव रचिता वेदमन्त्रा नरहितार्थम् ।—

वेदाः सृष्टा न प्रगुणमनुजैरीश्वरो यत्र कर्ता
सृष्टेः प्रागेव श्रवणविषया भान्ति तेऽपौरुषेयाः ।
मन्त्रद्रष्टा स्यादृषिपदमतो नित्यमाकर्णयंस्तान्
स्वाध्यायेनातो लभत इह यो भक्तिमान् सद्गुरोश्च ॥५४

सिद्धार्थः ।—चक्रक-न्याय एव पण्डितैः समाश्रितोऽत्र । ईश्वरास्तित्त्वं प्रत्यक्षानुमानप्रमाणाभावात् त्रैविद्यशब्दज्ञानेन प्रतिष्ठाप्यते परन्तु वेदानां प्रामाण्यमीश्वरकर्तृत्वादनुमीयते । शब्दमात्रसम्बलं प्रमाणं तु प्रत्यक्षानुमानरहितात् प्रत्ययादेव गृह्यते । तथ्यं तः प्रोक्तं कटोपनिषदि विचक्षणेन केनचिन्मुनिना—

"दन्द्रम्यमाणाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः"—इति ।

शुद्धोदनः ।—हा हतोऽस्मि मन्दभाग्यः ! वेदोद्धृतिरेव क्रियते वेदप्रामाण्यनिरसनाय । ईदृशं विषमयं ते वेदाध्ययनस्य फलम् ! तथा हि—



स्वाध्यायो भक्तिहीनस्य निर्मूले जलसिञ्चनम् ।
निष्फलं तस्य हि ज्ञान-मजागलस्तनैः समम् ।।५५

गौतमी ।—सहजश्रद्धामना एव पुत्रः सिद्धार्थः । परन्तु तस्य श्रद्धामाकर्षयति न केवलं तत्त्वज्ञानम् अपि च हृदयमाधुर्यमेव ।

शुद्धोदनः ।—शनैः देवि गौतमि !—

नृत्तमना यः स्यादनिशं
चञ्चलभङ्गि हर्षयुतः ।
कस्तु मृदङ्गं वादयते
नृत्तकृते तं नोदयितुम् ।।५६

सिद्धार्थः ।—(सस्मितम्)—पितः ! स्वयमेव वक्तुकामोऽस्मि किञ्चित् । शृणुष्व मातः ! मस्तिष्कन्यायान्न लघीयान् वक्षोन्यायश्चित्त-चन्दनसिक्तः ।—

यावन्न्यायो निपुणमनसां वर्तते मूर्ध्नि नृणां
न्यायस्तावन् निभृतहृदये मन्दधीमात्र आस्ते ।
धीमत्ताया भवति नितरां वाक्यमन्द्रा हि शक्ति-
र्हृल्लीनाऽवाङ् मधुनिशि यथा सुप्तिमग्ना ह्रदोर्मिः ।।५७

परन्तु हृदयन्यायेनापि न कामये स्नेहकल्पतरुं पितरं मे पीडयितुं मनागपि । चिन्ताधारा मम विचारमूढा प्रतीभातीति मन्ये ।

शुद्धोदनः ।—वत्स ! नास्ति प्रयोजनं मम हृदयतोषणेन । कामं हृदयं प्रिय-जनस्य न क्लेशयेत् सुधी स्तथापि धर्मस्तु सर्वमतिरिच्यते । सनातनः खल्वस्माकं धर्मो धारयति यो भारतीयांस्तथा मानवान् सर्वकल्याण-हेतवे । ईदृशस्य धर्मस्य विकृति र्यथा व्यथयति मां न तथा मम निर्देशस्य लङ्घनमपि ।—

वित्तं चपलं चटुलं चित्तं
चलद् यौवनं जीवनं जगच्च ।
अचलप्रतिष्ठ श्चञ्चले भुवने
वैदिको धर्मो नः परार्थश्चिरन्तनः ।। ५८



सिद्धार्थः ।—पितः ! क्षम्यतां मे वाचालता । अनन्तपारः किल ज्ञानसिन्धुर्यस्य वेलायाम् उपलान्यन्विच्छन्ति मानवा धुरन्धरा अपि । तत् कथङ्कारं निखिलज्ञानं पूर्वसूरिभिरेव सम्प्राप्तम् । हृदयस्य धियश्च वैपरीत्यं स्मारं स्मारं चिन्तान्वितोऽहं रात्रिन्दिवं व्यवहारिकज्ञानस्य चार्थक्रियाकारित्वहेतोः । मन्येऽहं प्रयोजनमस्ति नवतथ्याविष्कारस्येति ।—

ग्राह्यं न सर्वं प्राक्तनताया हेतो-
र्ज्ञानं क्व सान्तं विश्वे विशाले ।
नव्यं च तत्त्वं दद्यु र्नवीना नृभ्यो
नार्षं तथापि श्रेयो भवेत्तत् ।।५९

—परन्तु प्रगल्भतया न व्यथयामि भूयः पितरं भूदेवम् । अतो विदायं याचे साम्प्रतम् । सर्वथा विजयतां शाक्यकुलचूडामणिः ! गच्छामि यावन्मातः !

गौतमी ।—सुखमवाप्नुहि वत्स !

(सिद्धार्थो निष्क्रान्तः)

गौतमी ।—परमं विभ्रान्तो विषादं च गतः सिद्धार्थः ।

शुद्धोदनः ।—विषादो विषादो विषादः ! विषादः सर्वदा विषादः सर्वत्र विषादो हि केवलम् ! विषादन्यायेन विश्वसमस्यापूरणं न सम्पद्यते, प्रिये !

आत्मविषादमात्रमवनौ जयति न महतो
नान्यजनार्तिमत्र सततं बहुगणयति सः ।
दुःखमपास्य पुण्यचरिते लसति मुनिवृषो
धर्मपथेन चक्रमुखरं चरतु नृपरथः ।।६०



तथापि पुत्रस्य मे चित्तविनोदं चिकीर्षुरस्मि। न हि सुखं दुःख र्विना लभ्यत इति न जानाति सः। क्लेशकण्टकाकीर्णा मार्गा एव तस्य दृष्टिविषयं गताः। पश्यतु स प्रकृतिक्रोडे जनारण्ये च हास्योल्लासनर्तनम्।—

गहनवनेषु दुःखरहिता श्चरन्ति नित्यं मृगाः
प्रकृतिगणः पुरे च लभते यथेप्सितं निश्चितम्।
जगति विषादकारणमतो न केवलं कल्पते
स्थिरमनसो विदन्ति निखिलं सुखासुखै र्मिश्रितम्॥६१

गौतमी।—आनन्दं विहाय यः केवलं दुःखचिन्तनं करोति कुत्र भवति तस्य स्तोकेनापि सौख्यरतिः? न्यायजालञ्च भवतश्छिन्नं तेन यद्यपि प्रायतत भवान् भृशं तस्य तर्कवाणान् मोघीकर्तुम्।

शुद्धोदनः।—नास्ति मे वितण्डायामभिरुचिः कुशलता वा। तथापि महान् यत्न एव कृतोऽस्मिन् विषये प्राणावेगप्लुतः। परन्तु गौतमि!—

यदा त्रैविद्यस्तनयो गुणान्वितः
स्वधर्माचारं हि निनिन्द जाल्मवत्।
वचांसि क्षिप्त्वा हृदयं भिनत्ति मे
तदा नाशंसे नयसंख्यसञ्जयम्॥६२

गौतमी।—कोऽपनोदयति क्लेशमावयोः? यास्यामि तावत् कार्य्यान्तरव्यपदेशात्। समाश्वसितु स्थितधीर्भवान्।

(निष्क्रान्ता)

शुद्धोदनः।—निष्फलतां गतं मे राज्यशासनं प्रजापालनं तथा धर्माचरणं च। प्रेयस्यपि न जानाति मम चित्तस्य उत्तालक्षोभम्। हा नियते अन्धकल्पे हृदयहीने विचारमूढे! त्वमसि सर्वजया जगति।—



न विद्या न वित्तं न शीलं ध्यानं
न राज्यं विशालं सौख्यायालम् ।
अथात्र प्रभुः को विधातुं त्राणं
कपालं कपालं निगूढं भालम् ।।६३

(कराभ्यां ललाटं धृत्वा निष्क्रान्तः)

—इति द्वितीयोऽङ्को धर्मविचारणं नाम—





# तृतीयोऽङ्कः

## प्रवेशकः

(ततः प्रविशन्ति प्रासादालिन्दे तिस्रो युवतयः)

मन्दारिका ।—हला मालविके ! किमर्थं केशसज्जामकृत्वा स्रस्ताञ्चला त्वमागताऽत्र चपलचरणेन ?

मालविका ।—सखि, कथं छलप्रश्नं करोषि ? मृषा जिज्ञाससे त्वरितकारणम् । को न जानाति यास्यति युवराजोऽद्य राजवर्त्मना स्यन्दनारूढः ? सिद्धार्थदर्शनं गमयति सर्वेषां लोचनार्थं परमां सिद्धिम् ।



तरलिका । (सहास्यम्)—उद्भिन्नकोरका मन्दारिका कल्पोद्यानलतिका । पुष्पस्रजं रचयित्वा प्रतीक्षते सा यौवनकुञ्जागतं पथिकम् ।—

अन्तरकुञ्जे ते रौति मधुस्वरो
यौवनमञ्जूषे जागृहि सत्वरम् ।
हृद्यमभिज्ञानं वाञ्छति सुन्दरो
रक्तदलं यच्छ प्रस्फुटमञ्जरम् ॥ ६४

मालविका ।—को जागरयति छद्मस्वप्नविलासाम् ?

मन्दारिका ।—मा गमो वाचालतां बालिके मालविके ! नागच्छति राजाध्वना नागारिकाचित्ततोषणो युवकः कोऽपि । यौवने मुनिव्रतः सिद्धार्थो न काङ्क्षते कामिनीकाञ्चनम् । परन्तु सुदर्शनः पुण्यशीलो जनमनोरञ्जनाय सततं प्रभवति । नायं साधारणमनुष्यः यः सुरकल्पो नररूपेण तिष्ठति । भूदेवसूनुः सिद्धार्थः सर्वैरेव वन्दनीयः ।

तरलिका । (सहास्यम्)—अयि भक्तिनम्रचित्ते ! कथं त्वमपि आलुलितकुन्तला ? चरणोपान्ते लुठति ते कवरीशोभनं नवकर्णिकारम् । किमर्थं कटिदेशं विहाय वस्त्राञ्चले विलग्नः काञ्चीगुणः ? कौतूहलस्फुरिते आयते लोचने मर्मरहस्यं समुद्धाटयतो निरन्तरम् । कथङ्कारं प्रवञ्चनावाचनै र्मोहयसि मां, युवजनमोहिनि ?

मालविका ।—कलहं मा कुरुतं रमणीरत्ने ! आयात्यञ्जसा सर्वकलहभञ्जनो गौतमीनन्दनः । नूनं प्रापयति वसुन्धरां स नन्दनकाननत्वम् ।

मन्दारिका । (नेपथ्यमवलोक्य)—हले तर्कमदमत्ते ! पश्यतं पश्यतं रथाग्रनृडां सूर्यरश्मिचित्रितां च वैजयन्तीम् । शृणोमि रथचक्रनिनादं मृदुमेघडमरुवत् सुस्वनम् ।

तरलिका । (सस्मितम्)—घोटकखुरघातोऽपि मृदुलायते मधु वर्षति च मन्दारिकायाः कर्णे । आत्ममर्मध्वनिना मधुरीकरोति सा यत् किमपि श्रुतम् । तथा हि—



दृश्यं शोभनं न कुत्रापि शोभनं हि दृष्टं यदा
शब्दो मञ्जुलः कुतो वा नु मञ्जुलः श्रुतः कर्णयोः ।
बाह्यं किञ्च सुन्दरं स्यान्न सुन्दरं धृतं त्विन्द्रियैः
सर्वं रञ्जनं भवत्यत्र मानसेन्द्रचापांशुना ।। ६५

मालविका ।—रसोर्मिकां मन्ये तरलिकां तरङ्गिणीरूपिणीम् ! यदि तावन्मेघमेदुरे चित्तनभसि तव देदीप्यते रसेन्द्रधनुस्तत् श्रावय सखीजनं किञ्चन मनोहरसङ्गीतम् ।—

निर्झरिणी किं नृत्तपरा
मर्मणि धृत्वा कान्तरसम् ।
नात्र चरन्ती सञ्जनयेत्
स्निग्धरवैर्न श्चित्तमुदम् ।। ६६

मन्दारिका ।—नृत्यगीतपटीयसी खलु विदुषी तरलिका । करोतु मधुस्वनैः सा सर्वकर्णविनोदनम् ।—

रसोर्मिकं हि संस्मृत्य वक्षसि प्रतिबिम्बितम् ।
प्रेमपेयं कलारावं स्रावयतां तरस्विनी ।। ६७

तरलिका । (सस्मितम्)—यदाज्ञापयतः श्रीमत्यौ नर्मसख्यौ ! परन्तु गमिष्याम्युपहास्यताम् इति मे शङ्का ।—

(गायति)—

राजधान्यङ्गने राजत-स्यन्दने
व्रजति नृपतेः सुतो मन्दम् ।
मा कृथा रञ्जने पाण्डुता-मोचने
समयविगते हृदिस्पन्दम् ।।

संक्रमे भुजगान् विक्रमे तुरगान् शक्यते बाधितुं काऽबला बाले,
रंस्यसे यद्यपि प्रेक्ष्य तानाले ? (ध्रुवम्)



रंहसा मारुतं नोदयंश्च द्रुतं
जनयति रथः परानन्दम् ।
पुंपिकस्यारुतं पञ्चमेन स्रुतं
सृजति परितः सुधास्यन्दभ् ।।······।। ६८

( नेपथ्यमवलोक्य सहसा विरम्य )

पश्यामि स्यन्दनादवतीर्य मृदुपादचारेण भ्रमन्तं युवराजम् ।

मालविका ।— एहि तरलिके ! एहि मन्दारिके ! शीघ्रं गच्छामः पार्श्वस्थं वातायनम् । ततो हि विशदं दर्शनं लभ्यते सर्वाभिः ।

तरलिका
मन्दारिका } (युगपत्) — सत्वरमेव सखि !

( निष्क्रान्ताः सर्वाः )

— इति प्रवेशकः —



( ततः प्रविशति छन्दकेन सह सिद्धार्थः )

सिद्धार्थः ।— मधुरोऽद्य प्रदोषः ! पक्षिकूजनेन मुखरितानि मार्गोद्यानानि विचित्रकुसुमसौरभाणि । पद्मपलाशैरास्तीर्णाः शष्पप्रान्ताः पन्थानः । हर्म्याणि पथिपार्श्वस्थानि सुरम्याणि तुङ्गान्यभ्रंलिहानि । नवपल्लवैः पताकाभिश्च सज्जितानि तानि सर्वाणि नागरिकैः । देवदूतकल्पाः



मनोहराः शिशवः क्रीडन्ति काननेषु गृहप्राङ्गणेषु च। शङ्खा भेर्यस्तथा पणवगोमुखा निनादयन्ति सर्वतो मुहुर्मुहुः। आलिम्पन-चित्रितेषु तोरणेषु चक्रवृत्तचारिण्यो हुलहुलीं माङ्गलिकीं कुर्वन्ति पुराङ्गनाः। अहो !

प्रस्फुटानि सुमनांसि पथि पथि
पक्षिणश्च कुहरन्ति सुमधुरम्।
नन्दनस्य शुचिभा शिशुवदने
घोषयन्ति मनुजाश्च पुरि सुखम् ।। ६९

छन्दकः।—आयुष्मन् ! भवतो दिव्यमूर्त्तिं द्रष्टुकामाश्चञ्चलास्तरुण्यः प्रतिगवाक्षं नेत्रोत्पलान्युन्मीलयन्ति। हर्षोत्फुल्लाननाश्च सर्वाः परस्परं निर्दिशन्ति भवतो गतिम्। वाङ्मुखराश्च गुञ्जन्तीव यथा प्रमत्ता भ्रमर्यः। तासां नूपुरशिञ्जितेन दिगन्ता भृशं मन्द्रिताः।—

हसन्ति कन्याः प्रलपन्ति चान्या
मुहुर्हि शङ्खं मधु वादयन्ते।
अपाङ्गभङ्ग्या रथिनं समीक्ष्य
सलाजपुष्पं विकिरन्ति मान्याः ।। ७०

सर्वा एव अभिनन्दयन्ते भृशमायुष्मन्तम्।

सिद्धार्थः।—प्रीतोऽस्मि भूयिष्ठेन। पितुः शुद्धोदनस्य राजधान्यां सुखेनैव निवसन्ति प्रजाजनाः।

यद्येवं मनुतनया निवसन्ति नित्यं
सत्यं स्यान्निखिलधरा मर्मरम्या।
या वार्ता श्रवणमिता दुनोति चित्तं
मिथ्या सा भवति यदैव नेत्रगम्या ।।७१



छन्दकः ।—आयुष्मन्, त्वद्दर्शनं लब्ध्वा सर्वे नागरिका मोदस्य पारं गताः ।

सिद्धार्थः ।—किं मम दर्शनं हि……? (सहसा नेपथ्यमवलोक्य) छन्दक ! कोऽसौ पलितकेशो भ्रूसंवृताक्षो दन्तविहीनः कम्पितयष्टिहस्त स्तथाऽवनताङ्गः स्खलितपदेन चलति वृक्षवेदिकामुद्दिश्य ? मन्ये स शयितुमिच्छति प्रतिमुहूर्तमिव मार्गवक्षसि क्लान्तिमूर्छितावयवः । कः कः खलु सः ?

छन्दकः ।—युवराज, जराग्रस्तो नरः स यस्य सर्वाङ्गानि गलितानि देहशक्तिरस्तमिता चित्तवृत्तयश्च करालकालकवलेन नष्टप्रायाः । जरा तु सर्वेषां नराणां तथा जीवान्तराणां ह्यन्तिमदशा ।

शुभ्रकेशराशि र्दन्ता जीर्णा
लुप्तदृष्टि र्देहयष्टिः शीर्णा ।
चित्तवृत्तिगणः कृतान्तलाञ्छनो
मर्त्यान्तदशा कालहस्तदीर्णा ।। ७२

सिद्धार्थः ।—छन्दक, किं वित्तशालिनां तथा पूतचारिणां राजन्यानां चावश्यम्भाविनी करुणैषाऽवस्था ? अपि देहभृन्मात्रं कालक्रमेण जराक्रान्तं भवेत् ?

(नेपथ्ये) कष्टं भोः कष्टम् !

सर्वाङ्गं लुलितं स्खलन्ति दशनाः स्वेदस्रुति र्वधिता
दृष्टे र्ज्योतिरपि श्रितं विफलतां कर्णेन नाप्तः स्वनः ।
वक्षःपिञ्जरतः प्रियासुविहगो निष्क्रान्तये क्रन्दति
दुर्दैवं मम हन्त जीर्णवयसः शार्दूलभीरो र्यथा ।।७३

सिद्धार्थः ।—अहो ! दुःसहमतिशयेन हि जराग्रस्तस्य वैक्लव्यम् ।

छन्दकः ।— आयुष्मन् ! (अङ्गुल्या निर्दिश्य दिगन्तरम्) सन्निहिते पुष्पोद्याने क्रीडन्ति शिशवः कदम्बमुकुलैः । ललितलीलामत्तास्ते न दृष्टिं यच्छन्ति मद्विधेभ्योऽपि ।



सुरम्यकाननेऽमुतः परस्परस्य नन्दनं
प्रवर्तयन्ति बालकाश्चितैः कदम्बकोरकैः ।
हसन्ति वीक्ष्य बालिका हसन्ति पुष्पिता लताः
प्रफुल्लसुस्मितैः कृतं नराश्रये सुराङ्गनम् ॥७४

सिद्धार्थः ।—अहो ! मधुरं मधुरं तेषां दर्शनम् । न विदन्ति शिशवः कालस्य कुटिलां गतिम् । यदि नरमनः शिशुचित्तवद् अभविष्यत् तर्हि मानवा स्त्रिदिवं पृथिव्यामरचयिष्यन् ।

क्रीडासु भोज्ये विलसन्ति शिशवः सुप्तौ च निरता
जानन्ति हर्षं भुवनं हि परितो न क्वापि विषमम् ।
कौटिल्यकीटो न भिनत्ति हृदयं मन्दारसदृशं
निष्पङ्ककोषात् सततं परिसृतो दिव्यात्मसुरभिः ॥७५

(नेपथ्ये) मुञ्च मामम्ब ! गच्छामि तावद् राजवर्त्म युवराजम् अवलोकयितुम् । रुग्णोऽप्यहं न स्थातुं शक्ये बन्दिवदलिन्दगर्भे वात्यालोकरहिते । कष्टं हा कष्टम् ! न जहाति व्यथा मां क्षणमात्रमपि । कथं नु जीवनं धारयामि दुःखहेतो र्दुर्वहम् ?

नियतिवशाद्रुजः कठिनमुष्टिना धृतोऽहं
क्षणमपि सुस्थितिं न तु लभे दिवा च रात्रौ ।
यदि मम जीवनं भवति सर्वथार्तिकारं
नियतमवाञ्छित स्तदवनाय कृतः प्रयत्नः ॥ ७६

सिद्धार्थः ।—हा हन्त मन्दभाग्यम् ! आत्मनो मरणं काङ्क्षते साश्रुलोचनः करुणस्वरेण च व्यथां वर्णयति । कोऽसौ स्यात्, छन्दक ?

छन्दकः ।—रोगजर्जरो जनः स शय्यालीनो रात्रिन्दिवम् । भवन्तं द्रष्टुकामो वहिरागन्तुं चेष्टते परन्तु चलच्छक्तिरहितो न क्षमो वासनापूर्तये । कष्टदायकं खलु रोगाक्रमणम् ।



अङ्गं मलिनं शुष्कं चर्म
रुक्षभ्रूर्वंजा गात्रे घर्मः ।
नित्ययन्त्रणा मृत्युमन्त्रणा
सर्वमेतद्धि रुजो विकर्मं ।। ७७

सिद्धार्थः ।—ब्रूहि मे छन्दक ! अपि सर्वे मनुष्या रोगेण ग्रसितुं शक्यन्ते ? किं बलवन्तं सुश्रीतनुमपि बाधते व्याधिव्यालः ?

छन्दकः ।—अथ किं देव ! न कोऽपि मनुजो दिव्यदेहोऽपि व्याधिं विहातुं समर्थः ।

सिद्धार्थः ।—अहह ! किं क्रियते तद् व्यायामादिभि स्तथा सुखाद्यानां मित-भोजनेनापि ? अनिवार्यं दुःखमेतत् स्यान्मन्दभागस्य तनुभृतः ।—

सुष्ठु भोजनं करोति यद्यपि स्वकर्मधीरो
नन्द्यते तथा च येन संयमेन राजहर्म्ये ।
व्याधिरत्र मानवं न जहाति मर्मपीड-
स्तर्हि निष्फलं वेद्मि शक्तिसाधनं तनोर्मे ।। ७८
मन्ये रुजाक्रान्तस्य वार्धक्यं जायते जरसा विना ।

छन्दकः ।—आयुष्मन् ! पुरतः शोभते वर्त्मसंलग्नभूभागे रम्यस्तडागो नलिनी-दलशोभितो विकसितानि च यस्मिन् रक्तानि शतदलानि शुभ्राणि तथा सहस्रदलानि पुण्डरीकाणि । राजहंसा विचरन्ति ग्रीवा-मान्दोल्य पद्मबीजानि भोक्तुं च यतमानाः प्रतिभान्ति मे । द्वैरथ-क्लान्ताविव द्वौ मल्लवीरौ योवनाध्मानौ सन्तरतः स्वच्छन्द-चातुर्येण ।



सिद्धार्थः ।—सावधानदृष्टि स्त्वं छन्दक सदैव । सम्यक् प्रबोधितोऽस्मि चिन्तास्वप्नादेव त्वया सन्तोषकारिणा ।--

सूर्यालोके लसति हि सलिलं नीलोर्मि
स्वप्नोन्मीलं विकचशतदलै-रच्छोदम् ।
हंसै र्वध्वः कलरवमुखरैः क्रीडन्ति
यान्ति प्रेक्ष्य प्रतिपलमिह सर्वे मोदम् ।। ७९

छन्दकः ।—किमधुना रथमारोहति पुनरायुष्मान् ? भ्रमणेन क्लान्त्यातुरे स्यातां ते चरणे पद्मपलाशपेलवे । स्वर्णपादुके च जनयेतां पदरुह-क्लेशं सुतराम् ।

सिद्धार्थः । ( सस्मितम् )—प्रिय छन्दक ! आ जन्मनो विलासैर्लालितोऽपि नाहं सञ्जातो रमणीकल्पः । पदयात्रायामेव द्रष्टुं शक्नोमि बहुलं यन्न मया कदापि पूर्वम् अक्षिगोचरं नीतम् । संसारसरणि र्न भवति सुखप्रसूनैरास्तीर्णा जगज्जनकाभिधेयस्य वात्सल्यपर्याप्तै रितस्ततो विक्षिप्तैः । तथा हि महाजनवचनम्—

"क्षुरस्य धारा निशिता दुरत्यया
दुर्गं पथस्तत् कवयो वदन्ति ।" इति ।

अप्येतन्न ते श्रुतपूर्वम् ?

छन्दकः ।—अधमोऽयं रथं तुरङ्गांश्च चालयति न जानाति तु शास्त्रवाक्यानि बहुशः । तव श्रीमुखाम्भोजादेव निःसृष्टं ज्ञानमधु कुत्र कुत्रचिन्मया स्तोकेनाहृतम् । (विहस्य)—

इन्द्रगोपः श्रितो दूर्वां विदधाति सुरार्चनम् ।
सिद्धार्थसारथिश्चात्र छन्दकः पण्डितायते ।। ८०

( नेपथ्ये सवाद्यं सङ्गीतम् )



विष्णुदैवत विष्णुदैवत विष्णुदैवत शाधि गाम् ।
कृष्णकेशव कृष्णकेशव कृष्णकेशव पाहि माम् ।।
लप हरिनाम ! जप हरिनाम ! भण हरिनाम रे !
भज हरिनाम ! रच हरिदाम ! व्रज हरिधाम रे ! ! ८१

(सक्रन्दम्)—हा मे पितः ! सर्वानस्मांस्त्वम् अनाथीकृत्य परलोकाय गच्छसि ? को रक्षति ते दारासुतान् मित्राणि च बान्धवान् ?

छन्दकः । (ससम्भ्रमम्)—चलत्वायुष्मान् सत्वरम् । रथारोहणमेव विधीयते साम्प्रतम् । विलम्बाद् बिभेति महाराजो देवी गौतमी च ।

सिद्धार्थः ।—क्षणं प्रतीक्षस्व बन्धो ! को याति खट्वामारुह्य निमीलितलोचनः सुषुप्त इव जनोऽसौ ? न स जरापन्नो न च रोगशीर्णतनु दृश्यते । कथं तस्यानुचरा गायन्तो वाद्यं कुर्वन्ति तथापि रुदन्ति च ? कुत्र गच्छति स पुष्पभूषितश्चन्दनचर्चितकलेवरश्च ? कथं वा काष्ठभारं वहन्ति पश्चात् केचन ? किमापतितमत्र ?

छन्दकः । (स्वगतम्)—दारुणविपत्तिः समुपस्थिता ! न जाने कथं नगरारक्षका मृतदेहवहनम् अस्मद्वर्त्मनि न वारितवन्तः । नूनं भवतीदम् अशुभसूचकम् । (प्रकाशम्)—आयुष्मन् ! न मनो निधातव्यमत्र । शवं गृहीत्वा प्रयान्ति वाहका आत्मीयपुरुषाः श्मशानभूमिं मृतस्य सत्कारार्थम् ।

सिद्धार्थः ।—किं करिष्यन्ति ते तत्र ?

छन्दकः । (विषण्णम्)—दाहयिष्यन्ति ते पूताग्निना प्राणहीनं देहम् । अतःपरं शान्तिवारि विकीर्य शीतलीकुर्वन्ति भस्मावशेषम् । मुक्तात्मा यास्यति स्वर्गलोकम् ।



सिद्धार्थः ।—अनुमानं न सिध्यति प्रमाणाभावात् प्रमाणं च व्याप्तिविहीनमत्र न सिद्धम् ।—

व्याप्ते र्विना प्रतिज्ञा हि प्रतिज्ञातं न साधयेत् ।
तादात्म्यं वा तदुत्पत्तिः कल्पते व्याप्तिलब्धये ।। ८२

भवतु, किं जरसा रोगाच्च विना प्राणान् जहाति मानवोऽनस्त्राहतः ?

छन्दकः ।—वाढं देव ! युवकोऽपि कदापि म्रियते अनाहतो ज्ञातव्याधिहीनश्च । नियतिरेव अत्रातिरिच्यते । तथा हि भगवद्गीतायामुक्तम् ।—

"जातस्य हि ध्रुवो मृत्यु-
र्ध्रुवं जन्म मृतस्य च ।"

सिद्धार्थः । (सस्मितम्)—भस्मीभूतस्य देहस्य पुनरागमनं कुत इति वदन्ति लोकायतिकाः परन्तु न तत् श्रद्धेयम् । नात्मा देहसर्वस्वः स्यात् । तथापि छन्दक, जातस्य मरणं निश्चितं कारणं विनाऽपीति मन्यते विचित्रम् ।

छन्दकः ।—महाभाग !—

यस्य तु जननं तस्य च मरणं
ध्रुवो हि मृत्यु र्विना कारणम् ।
वरति यं गुणः सुस्थस्तरुणः
कुरुते सोऽपि श्मशानशयनम् ।। ८३

सिद्धार्थः ।—(स्वगतम्) अपि कारणं विना कार्यं सम्भवति ? किं कालस्य करालः करो निखिलनाशकारणं स्यात् ? परलोकनामा कल्पनाकृतनिकेतः कुत्र विराजते ? कर्मफलहेतो र्मनुष्याः स्वर्गं वा नरकं



गच्छेयुरिति श्रूयते। क्व वा तिष्ठन्ति कुम्भीपाकरौरवादीनि नरकाणि? कीदृशं वा स्वरूपं कर्मफलस्य? अप्यात्मा वस्तु-विपरीतस्वभावं किमपि द्रव्यम्? केन पथा कथङ्कारं वा स जङ्ग-म्यते? आत्मन्यपि भस्मीभूते मरणानन्तरं कर्मफलं कीदृशाधारं श्रयते? किं वा पुनर्जन्मनः प्रमाणम्? जातिस्मरस्य कीदृशी भवति स्मृतिः? प्रश्नबाणा भिन्दन्ति मेऽन्तरं निरन्तरम्। भवतु! (प्रकाशम्)——छन्दक! किं भाषसे? मरणं नूनं प्राणिमात्रस्य निर्घृणः शत्रुः। अपि च महान्तमपि मानवं तत् स्फुटकारणाद्विनाऽपि प्रेरयति लोकान्तरं भस्मीकरोति वा निःशेषम्?

मृत्यु मर्त्यजनस्य सङ्कटकरो व्यालादपि व्यंसको
व्याघ्रक्रूरनखै श्छिनत्ति करुणं हृत्पिण्डकं प्रत्यहम्।
पुण्यात्माऽपि न कर्तितुं नरवरः शक्तः कृतान्तग्रहं
याच्ञाभिः स्तुतिवाचनैश्च रुचिरै र्नं प्रीण्यते हिंसकः॥८४

नास्ति किं मृत्युचिन्तातुषानलज्वालाया निर्वाणविधानम्? पुनर्जन्म यदि सम्भवति तथापि संसारचक्रे चंक्रमणमपि जराव्याधिमरणाहतस्य दुःसहदुःखजनकम्। तन्मन्ये प्राणवर्तिकाया नितान्तनिर्वाणमेव वाञ्छनीयं परमम्। भावनाकुलाले घूर्ण्यमानं मे मानसं न लभते शमं क्षणमपि। क्षणिकमोदनाय तत् कथं प्रयतन्ते रात्रिन्दिवं मानवाः?

न मुक्ति र्व्याधिभ्यो विकटकवलात् किञ्च जरसो
न मृत्युग्राहाद्वा यदि तनुभृतां सम्भवति नः।
न वेद्मि प्रोन्मत्ताः कथमिह यथा कस्तुरिमृगा-
स्तथाऽटन्ति प्राप्तुं जगति मनुजाः काम्यमनिशम्॥८५



छन्दकः। (आत्मगतम्)—व्यर्थं खल्वद्य महाराजस्यायोजनं युवराजमनोरञ्जनाय! दृष्टानि शोभनानि चित्तसुखानि बहूनि परन्तु त्रीणि दृश्यानि सर्वाण्येव मोघीकुर्वन्ति नियतया। अथवा नात्र विस्मयहेतुः।

न तृष्णाहतं रमयन्ते कवोष्णतिक्ताम्बुकूपाः
क्व गुञ्जाफलै र्मणिकारः प्रवञ्च्यते रत्नकल्पैः।
क्व खद्योतकान्मुदमेति प्रभुः शशाङ्कार्चिरूपो
न मायात्मजं शुचिबुद्धिं मरीचिका नन्दयन्ते ॥८६

(प्रकाशम्) आयुष्मन्, सुखदुःखयो-रावासस्थानं जगत्। दुःखं विहाय सुखमेव ग्राह्यमस्माभिः। अवश्यम्भाविनश्च विषादस्य विनाशस्य वा हेतो श्चिन्तनं यथाशक्ति वर्जनीयमिति मन्येऽहं मन्दधीः। अधुना स्थानान्तरगमनं भवतो मानसं विषयान्तरे निधाय स्तोकेन शमयति।

गात्रस्वेदं नुदति समीरः
स्निग्धं चार्को विकिरति रश्मिम्।
क्रान्तिक्लेशो न शिशिरकाले
यायाच्चित्तं सपदि सुतृप्तिम् ॥८७

सिद्धार्थः।—सखे छन्दक! दुःखपूर्णे जगति कुत्रावकाशः सुखचिन्तनरोमन्थस्य मानवस्य तृणभोजामोदस्य पशोरिव?

दुःखार्ते संसारे मरोर्हि तुल्ये
जीवानन्दोद्यानं तु गोष्पदं स्यात्।
सप्तानां सिन्धूनां जलं मिमीते
ना सर्गान्निःसृष्टं नराश्रुराशिम् ॥८८

तथापि क्रन्दनेन क्व वाऽपाक्रियते क्रन्दनकारणम्? न जाने किमहं महताऽऽयासेन रोदनमेकस्यापि वारयितुं शक्नोमि न वेति। परन्तु निश्चेष्टवृत्ति र्न तृप्यति मामभाजनम्।



सफलपरिणतिः किमु प्रयत्नः
किमुत भवेन्मम चेष्टनं हि वन्ध्यम् ।
अविकचमुकुलं न निष्फलान्तं
न विफलतामपि संवृणति फल्गुः ।।८९

(नेपथ्यमवलोक्य) कोऽयं गच्छति जटाजूटसमन्वितश्चीरवसनः कमण्डलुहस्तो हास्यदीप्तवदन श्छन्दक ?

छन्दकः । (हस्तं ललाटे स्थापयित्वा स्वगतम्)—न दैवं रोद्धुं शक्यते केनापि विश्वे । यानि यानि परिहर्तव्यानि तानि तान्येव समुपस्थितानि नियतिकराङ्गुलिसङ्केतेन इत्येव प्रतिभाति । (प्रकाशम्) प्रभो ! भिक्षुरयं सन्न्यासवृत्तिः । भोजनं शयनं करोति पुरुषोऽयं यत्र तत्र भस्मेन च विनोदयति सर्वाङ्गानि । न दारासुता ईदृशस्य स्नेहपुत्तला नास्ति च बान्धवजनः ।

सिद्धार्थः ।—अपि वक्तुकामस्त्वं सन्न्यासी दुःखतमसि कालं यापयतीति ?

छन्दकः ।—नूनमीदृशजनो दुःखम्·········

(नेपथ्ये) भिक्षितमशनं गैरिकवसनं
तरुतलवसति स्तृणेषु शयनम् ।
भोगविराग स्तपोऽनुरागः
सन्न्यासः खलु सुखतृषशरणम् ।।९०

छन्दकः ।·········अस्मद्भोरयं न जानाति । तथापि सुखं च न तस्याधिगतं हस्तामलकवत् ।

सिद्धार्थः । (सस्मितम्)—अस्माभि र्वा कीदृशं सुखमुपभुक्तम् ? मरौ मरीचिकेव विलीयते सुखमन्वेषिणां दृष्टिपथात् । सन्न्यासी तु परं सौख्यं लब्धवान् इत्येव मे प्रतिभाति ।—



केशा स्तैलविवर्जिताः कृतजटाः श्मश्रुप्रकीर्णं मुखं
वस्त्रं गैरिकमुत्तरीयविरहितं नग्ने विशुष्के पदे ।
पानार्थं च कमण्डलुः करधृतः स्कन्धाहितो कम्बलो
भस्माच्छादितवह्निवज्ज्वलति तु ज्योतिर्मय स्तापसः ॥६१

बन्धो छन्दक ! दिष्ट्या खलु दर्शनं प्राप्तं मयाऽद्य सन्न्यासिनः । मयैव च सन्न्यासो ग्रहणीयः । कुत्रास्ति गृहिणोऽवकाशो निदिध्यासनाय निभृतम् ? अतः सत्वरमेव गृहत्यागो मे कर्तव्यः ।

छन्दकः ।—क्षम्यतां मूढो जनोऽयम् । भवतः प्रश्रयेण हि वर्धिता मम सास्पर्धा वाचाटता । राजर्षि र्जनकः पुरा किलासीत् ब्रह्मवित् परन्तु गृहाश्रम एव नित्यम् अलङ्कृत स्तेन महौजसा ।

सिद्धार्थः ।—अपि वेत्सि छन्दक विश्वामित्रो नृपति र्ब्राह्मणत्वलाभाय राज्यं तत्याज ? ब्राह्मणोऽत्र परतत्त्ववेत्तेति ज्ञेयः ।

छन्दकः ।—महर्षे र्वशिष्ठस्य कामधेनुं सुरभिमपहृत्य तेन पापमाचरितम् अतः प्रायश्चित्तसाधनहेतोर्हि सन्न्यासं स जग्राह । न पुण्यात्मना भवता किञ्चिदपि दुष्कृतमाचरितम् आ बाल्यात् । कथमत्र प्रयोजनं प्रायश्चित्तस्य ?—

प्रायश्चित्तं हि कर्त्तव्यं चित्तशुद्धैच दुराशयैः ।
तुल्यस्तेषां भवेद्राहु र्न चन्द्रमाः सितांशुकः ॥६२

सिद्धार्थः । (सस्मितम्)—किं छन्दको न जानाति चन्द्रस्यापि कलङ्कमस्ति ।—



यथा सुधांशोः स्मितमल्लिकार्चेः
कलङ्क आस्ते खलु पौर्णमास्याम् ।
तथैव लक्ष्म प्रगुणस्य पृथ्व्यां
कथं च नान्यै र्व्रियते वरं वा ॥ ६३

पितुरनुमतिं प्रार्थयिष्ये सत्वरमेव वैराग्यवरणार्थम् । एहि सखे ! चिन्ताज्वरः सञ्जातो मे पुनरपि मर्मदहनः । आत्मनः प्रमोदोद्यानं यावत् श्रयिष्ये निभृते कालं यापयितुम् ।

छन्दकः । (विषण्णम्)—यदाज्ञापयति प्रभुः ।

( निष्क्रान्तौ )

— इति तृतीयोऽङ्कः संवेगोत्पत्तिर्नाम —





# चतुर्थोऽङ्कः

(प्रमोदोद्याने कृत्रिमोत्सतीरस्थः सिद्धार्थः)

सिद्धार्थः ।—उपवेशनम् उत्सोत्सङ्गे नितरां रमणीयकम्! जललवसिक्तः समीरणः सुखसेव्यः परमशीतलो मर्मतापमपि नाशयति स्नेहस्पर्शेनैव । उत्क्षिप्ता श्चूणीकृताः फेनकणा नृत्यन्तीव ललितं लूतातन्तुजालं विरचयन्तः । सान्ध्यसूर्यरश्मिना सृज्यते रम्येन्द्रधनुश्चित्रकराङ्कितम् आलेख्यमिव शुक्लीकृते चारुभुर्जपत्रे स्वच्छप्राये ।



धूपगुग्गुलगन्धवत् तथा प्रस्यन्दमृगमदवासनिभः सुरभिरागच्छति विचित्रपुष्पकेसरनिःसृत इन्द्रियाणि च विमूर्छयन्निव चित्तं प्रीणयति । सर्वथा खलूपभोग्यमद्य दृश्यमनवद्यं प्रमोदोद्यानस्य !--

उद्याने प्रेक्ष्यकान्तौ प्रगममुकुलानि स्युर्व्रततिषु
क्षिप्ताश्चुम्बन्ति भृङ्गाः प्रतिकुसुमकोषं गुञ्जनरताः ।
चूर्णाम्भो निर्झरं मे प्रणयरुचिबिम्बं सिञ्चति मुखे
दृश्यै र्गन्धैः स्वनैश्च प्रचुरसुखसेव्यै स्तृप्यति मनः ।।६४

आगतोऽहं दिष्ट्या सुचिरेण काननभूमिं रचितां मोदार्थम् !

(नेपथ्ये सङ्गीतम्)

निर्घृण परभृत कथं वेत्सि न हि त्वं स्नेहं
चिन्तयसि बत नियतं त्यक्तुमतो मे गेहम् ।
प्रवासे तव हृदयं
प्रकामं ननु सदयं
नात्मजनपरिलसितं नन्दयते ते देहम् ।।
सद्मनि तव धव हितं मर्मरमं कुर्वेऽहम् ।।६५

सिद्धार्थः । (सचकितम्)--का गायति किन्नरीकण्ठेन खण्डितासङ्गीतं श्रुति-सुभगम् ? आह्वयति कं वा मिनतिव्याकुला तथान्तर्बाष्पा ? अपि नन्दनमन्दिरे तिष्ठति सा चित्तनन्दिनी ? न जाने कथं प्रवेशं लब्धवती सा निभृतनिकेतने मम ? विह्वलीभवति मनो मे अज्ञातव्यथादीर्णम् । दुःखसञ्जातं गीतं मन्ये मञ्जुलतमम् ।--

पश्चान्मार्गे मुहुरिह कृतो दृष्टिपातः पुरश्च
वाञ्छाऽतृप्ते-श्चिरमपि नृणां यन्त्रणाक्तं सुहास्यम् ।
निष्पीड्याहो हृदयकलिकां निस्रवः स्यात् स्वरस्य
सङ्गीतं नः सुमधुरतमं चित्तरक्तेन सिक्तम् ।।६६



(नेपथ्ये सकलहास्यं भाषितम्)—

रम्योद्याने रंहसा स्वप्नमग्नो
बिद्धो बाणैः पुष्पचापान्निषाद्याः ।
पुंसारङ्गः क्रन्दति भ्रष्टलग्नः
सञ्जीवन्या सेव्यतामोष्ठमाध्व्या ॥९७

सिद्धार्थः ।—मायाविनी काऽपि निवसति नर्मनिलये मे । निःसङ्गोऽहं किं करोम्यधुना ? (सोच्चकण्ठम्)—का जल्पति प्रलापं मम गृहाभ्यन्तरे अये ?

(ततः प्रविशति मोहिनीवेषा तरलिका)

तरलिका ।—न भेतव्यं न भेतव्यं मुनिकल्पेन । अबला नन्वहम् अस्त्रहीना । नाहं व्याधवृत्ति र्न च युवराजः कुरङ्गसदृशः ।—

न खलु न खलु शङ्का बाधतां शाक्यसिंहं
हृदयमधुकरीयं छद्म नाऽत्र प्रविष्टा ।
रहसि विकचपुष्पं द्रष्टुकामा त्वशोकं
मम चरणविघातै र्दोहदं लब्धवान् यः ॥९८

सिद्धार्थः । (सस्मितम्)—भाग्यवान् खल्वहं यन्मुकुलोन्मेषकारिण्या मुखं पश्यामि मनोरमम् । परन्तु न जाने ते कुलं शीलं वसतिं वा ।

तरलिका । (विहस्य)—युवराज ! किं करोषि किङ्करीपरिचयेन ? रूपमेव स्यान्नारीणां श्रेष्ठगुणः । यदि नाहं कुरूपा तत् शीलान्तरं न मृग्यतां तरुणवयसा ।—

केवलं कुलवती च सलज्जा
प्राकृतं न रमयेत् किमु भूपम् ।
वन्द्यते भुवि सदा शुचिसज्जा
भूषणं रमतमं खलु रूपम् ॥९९



परन्तु परिचयश्च ममास्ति । प्रियभार्यायास्ते यशोधाराया बाल्य-
सख्यहं तरलिका ।

सिद्धार्थः ।—तद् दैवप्रेरितोऽसि त्वं तरलिके भामिनि ! श्रावय मे तस्या
बाल्यक्रीडितं यन्नन्दयतेऽद्य मम विषण्णमानसम् ।

तरलिका । (स्वगतम्)—न दैवप्रेषिता महाराजस्य मुख्यमन्त्रिणा प्रणोदिता
इयमहम् । (प्रकाशम्)—युवराज, विस्मृतो मया प्रायेण शैशवस्य
चापलवृत्तान्तः । का वा रमणी पुरुषसमीपं कन्यान्तरचरितम्
अवलम्ब्य भाषते ?—

क्व रोचते नु योषिते द्वितीयवर्णिनीकथा
न संसहेत मानिनी युवानमन्यसेवितम् ।
सुकीर्तिलाञ्छनेन तद् यशो निजं हि वर्ण्यता-
मवैमि कर्णतोषणं करोमि ते प्रियं हितम् ॥ १००

(ततः प्रविशति मन्दारिका)

मन्दारिका ।—वन्दे सर्वार्थसिद्धं युवराजं मम च मर्मार्थसिद्धं यौवनराजम् !

सिद्धार्थः ।—तरलिके ! कैषा प्रगल्भा गजगामिनी निरङ्कुशा पद्मवनदलनी ?

मन्दारिका ।—नाहमासं स्तोकेनापि प्रगल्भा कैशोरेऽपि वयःसन्धिक्षणे । परन्तु
पदचारेण भवन्तं मूर्तानङ्गं राजवर्त्मन्यवलोक्य लोलकञ्चुलिकावन्
निमेषेण भूलुण्ठितो मे व्रीडाव्याजः । स्खलितं वहिर्वासो न पुन
र्गृह्णामि स्वरूपगोपनाय ।

तरलिका ।—ऊषोदयवद् अनवगुण्ठितां कुण्ठाहीनाम् उर्वशीमिव मन्ये
नर्मालीं मे मन्दारिकाम् ।—

दिगञ्चलां ज्वलोद्भासं तडिल्लेखां रुचिस्मिताम् ।
मन्ये मन्दारिकां दिव्यामुर्वशीमिन्द्रचर्चिताम् ॥१०१

अभिनन्दयते अत्र सा स्वयमरिन्दमं गौतमीनन्दनम् ।



मन्दारिका ।—मा मैवं प्रलप तरलिके तरलायतलोचने ! ननु युवराजः पुरूरवाः पुराणवर्णितः ।

तरलिका ।—कथं न ? शाक्यसिंहः शौर्यहर्यक्षोऽपि प्रेमपूरितमानसो विश्वजीवेषु का कथा तरुणीजनस्य ? मरालदुःखदर्शनादपि मुञ्चत्यश्रुशिशिरं नेत्रोत्पलयोः ।—

नीलाब्जकान्ति चन्द्रजस्य लोचनं
रूपं बिभर्ति कोकनदरक्तम् ।
हेतु र्हि तस्य बाष्पतोयमोचनं
काले विलोक्य जीवमभिशप्तम् ॥१०२

मन्दारिका ।—दुःखोदन्तं मा वद तन्वि चिरन्तनम् । हर्षप्रकर्षे काननेऽस्मिन् सुखसंवादमेव वितर । नृत्यगीतनिपुणा त्वम् आ बाल्याद् अतो नूपुरनिक्वणेन सखिहृदयं मन्द्रीकुरु नृत्तेन च जनयान्तरदोलनम् ।

तरलिका । (सनिःश्वासम्)—हला प्रियसखि ! कुशाङ्कुरेण बिद्धमद्य मे वामचरणम् आगमनसमये । साम्प्रतमुत्पाटितं कण्टकं तथापि महती यन्त्रणा मां बाधते । न शक्नोमि लास्येन विनोदयितुं सखीदयितम् ।

मन्दारिका । (सस्मितम्)—नास्ति विघ्नं नृत्तस्य । शराहतं हंसमपि यः सेवया निरामयं कृतवान् किं न स नारीकुलस्य कलहंसीं भजते चरणार्तिनाशाय ?—

तालवृन्तेन मन्ये स कुर्वीत ते वीजनं
शाम्यते शिंशपापत्र-संमार्जनै र्यन्त्रणा ।
अम्बुजांघ्रौ च संलेप्य चूर्णं हि नीलाञ्जनं
कार्यते स्वार्चया तेन कामं रुजः सान्त्वना ॥१०३

सिद्धार्थः । (सलज्जम्)—नास्ति मे कुशलता कामिनीचरणचर्यायाम् । तथापि आर्तजनस्य सेवा न कदापि ममावाञ्छनीया ।—



व्यसननिपतिता स्यात्तु तुल्या भगिन्या
कथमयमधमः सेवितुं न क्षमस्ताम् ।
जगति न भिषजा रोगिभेदो विचार्यो
भवतु च सुलभा मानसार्तेः प्रशान्तिः ॥१०४

तरलिके ! प्रदर्शय ते पदपल्लवं दर्भाङ्कुराहतम् ।

तरलिका । (सलज्जम्)—कथं माम् अपराधयते शाक्यकुल-शिरोमणिः ? त्वच्चरणचारिकैव तुच्छाबला । मुखरैषा मन्दारिका मामुपहसति हिताहितं च न जानाति ।

मन्दारिका ।—न मन्दायते नर्मोपदेशे मन्दारिका मन्दचारिण्यपि । बाल-व्रीडां परिहर यौवनोच्छले युवजनवन्दिते ! मनसा चिन्तितं यत्ते वचसैव मया तत् प्रचारितं चित्तरञ्जनम् ।

(चटुलस्वरेण गायति)—

गोपायसि किञ्चिदपि यदि
नेत्रमुकुरार्चिस्तु सपदि
प्रकाशयति मर्मणि गुञ्जति यद्रहस्यम् ।
पादार्चनमत्र निरवधि
वाञ्छति च नद्या जलधिः
प्रकामवति नर्मणि तं न कृथा निरस्यम् ।
प्रिया जगति कान्तहितं मनुते प्रशस्यम् ॥१०५

(ततः प्रविशति हास्योन्मत्ता मालविका)

मालविका ।—दिष्टयाऽहमागता मानभञ्जनलीलाम् अवलोकयितुम् !

तरलिका ।—दैवेन निर्दिष्टां मन्ये त्वां मालविके ! युवराजस्य कृते मन्दारिका मृग्यते नृत्तम् । परन्तु कण्टकपीडिताऽहं पदतले । कथमेवंविधा नरीनृत्यते लास्यकामाऽपि ?

मालविका । (जनान्तिकम्)—प्रणोदिता मन्त्रिवरेण खल्वहं कुमारविल-



सनार्थम् । (प्रकाशम्)—मालवनन्दिनीयं स्तोकेन वेत्ति नृत्य-गीतादिकम् । तथापि का कुशलता मे शाक्यविबुधनन्दनाय ? शङ्के निपुणचरणाया-स्तरलिकायाः पादपङ्कजार्तिः साधिता छल-मृणालकण्टकेन । अपि च भ्रमर एव गुञ्जनेन विमोहयति नलिनीं न तु नलिनी कुर्यान्नृत्तं मधुपमोदनार्थम् । कामं नास्मि पद्मिनी-कल्पा तथापि तरलिकायाः प्रतिनिधित्वं गन्तुकामा कामिनी ।

तरलिका । (सस्मितम्)—हिमाद्रेरागतेन देवदारुस्तुतिसुरभिणा समीरणेन मधुतरीकृता त्वं खलु शतदलरूपा । अतो वाग्बाहुल्यं विहाय नर्तितुं प्रक्रमस्व । मन्दायन्ते न खलु सुहृन्मोदार्थकृत्या वर-वर्णिन्यः ।

मन्दारिका ।—युवराजो यदाऽऽशति तदैव नृत्यकलां प्रदर्शयति सखी मालविकेति तर्कयामि ।

सिद्धार्थः ।—भवतीनां वाङ्मयामृतेनैव कृतं मे मनोरञ्जनम् । किमस्ति प्रयोजनं शुद्धान्तदुर्लभाया लास्यविलासेन ?

मन्दारिका ।—प्रश्नमीदृशं मन्ये सम्मतिसूचकम् ।—

रोचनराजकानने
लोचनलोभनानने
वान्तीह माधवपवना विमन्दम् ।
आदिशति प्रभाकरो
दीयत एव ते वरो
नृत्ताय चालय चरणावमन्दम् ॥१०६

तरलिका । (जनान्तिकम्)—कुमार, कर्णे तव कथयामि किञ्चन रहस्यं चित्तसुभगम् । (कर्णे वदति)—



मदकलपलता निभृतं तव
प्रणयमीहृत एव निरन्तरम् ।
कथमत्र करोषि चिराश्रव
व्यथितमात्मजनस्य हितान्तरम् ।।१०७

मा गम: कैतवम् आर्यवरेण्य !

सिद्धार्थ: । (तरलिकाङ्गस्पर्शम् अपावार्य स्वगतम्)—रोमहर्षणं जातं मे मदिरेक्षणाया ओष्ठाधरसान्निध्यादेव । कथमात्मानं रक्षामि चन्द्रिकास्पर्शेन तुङ्गतरङ्गं जलनिधिमिव ? न जाने किं घटतेऽद्य रम्यारामे !

मालविका ।—कथं तूष्णीमास्ते तरलिकाकौतुकेन विमुग्धमाधव इव शाक्य-पुङ्गव: ? (जनान्तिकम्) हला मन्दारिके !—

गुह्यं वक्ति प्रलपनपटु वीर्यशुल्का प्रगल्भा
ताम्बूलाक्तं स्फुरितमधरं काङ्क्षते सोऽप्रमेयम् ।
अङ्गस्पर्शाच्छिहरति मुहु: पश्यतीयं सदम्भा
वन्ध्यं क्व स्यात् तनुविमथनं गुञ्जितं श्रोत्रपेयम् ।।१०८

तरलिका ।—कथङ्कारं मृदुभाषणं भवति युवयोर्युवतियुग्मके ? हितमेवासीद् ईप्सितं मया । नूनं युवराज आदिशति मालविकां नृत्तारम्भाय ।

सिद्धार्थ: । (सस्मितम्)—तद्भवतु नाम नृत्तवृत्तम् !—
मातङ्गोऽपि न शक्नोति वारयितुं तरङ्गिणीम् ।
लास्यकामां कुरङ्गीं को बध्नाति वाक्यरज्जुना ।।१०९

मन्दारिका । (करतालं विधाय)—मन्त्रवशं गतो वीरवरस्तरलिकाया: । मा कुरु विलम्बनमधुना मालविके ! श्रावय नो मनोहरं गीतकं दर्शय च नृत्यचातुर्यम् ।

तरलिका । (सस्मितम्)—



नृत्यतु नार्याः पादयुगं
नृत्यतु सार्धं तेन तनुः ।
चित्तमपि स्यान्नृत्तरतं
भोक्तृजनस्य प्रीतमनः ।।११०

मालविका । (सव्रीडम्)——यथा निदिष्टा तथा करोमि ।

(नृत्यन्ती गायति)

—बर्हिनृत्तम्—

नृत्यति ममाद्य हृदयं मत्तमयूरसदृशं
प्रमत्तमयूरसदृशम् ;
विचित्रजल्पं मनसोऽभिलाषं
कलापकल्पं तनुते प्रकाशं
नृत्यति विलोक्य गगनं वेद्मि न कञ्चन भृशं
सुमञ्जुलकज्जलदृशम् ।
नृत्यति ममात्र हृदयं क्षिप्तमयूरसदृशम् ।।

नृत्यति ममार्तहृदयं कुञ्जकलापिसदृशं
दुरन्तमयूरसदृशम् ;
प्रकम्पवृत्त्यां विभङ्गघूर्णं
विकीर्य पृथ्व्यां शिखण्डचूर्णं
बिभर्ति वर्षासु रंहश्च वातोर्मितूर्णं
केकास्वनै र्नरीनृत्यते दिगन्तरेऽपि तीव्रतृषम् ।
नृत्यति मम मानसं हि सखि मुहु र्मयूरसदृशं
प्रकाम्य कुरङ्गमदृशम् ।
नृत्यति विषण्णहृदयं कान्त मे क्षुब्धमयूरसदृशम् ।।१११



सिद्धार्थः। (सस्मितम्)—अभिनन्दये नृत्तैन्द्रजालिकां मालविका-सुन्दरीम्। मायामयूरीव प्रादर्शयत् सा लास्यकुशलताम्। अम्बुदडमरु र्ध्वनति मन्ये मन्मानसनभसि!

तरलिका।––अतः सफलतां गतं मे दौत्यम्। मालविकया नाटिता मेघदूती तडिल्लतास्मितं जीभूतञ्च स्तोकेनासेवत।

सिद्धार्थः।––अथ किं तरलिके! प्रभुत्वं त्वया च दर्शितम्।

मन्दारिका।––वयं सर्वा भूताः कृतार्थम्मन्या इष्टसाधनहेतोः।––

सुकृष्णचूर्णालकदृप्तमर्हं
षड्जानुषङ्क्वणकाञ्चिहास्यम्।
उदग्रचेलाञ्चलचित्रबर्हं
प्राणन्दयत्तं शिखिकल्पलास्यम्॥११२

किं न पारितोषिकं दीयते राजनन्दनेन मालविकायै प्राणतोषिण्यै दीनतरुण्यै?

सिद्धार्थः।—धरादुर्लभं त्रिदिवपुष्पं पारिजातमेव युज्यते दिव्यकर्मणि। कथमहं लभेयेयं तद्विधम्? तन्नवकर्णिकारम् आसन्नचितं भवतु तत्स्थलाभिषिक्तम्! अपि रोचते कोरकं कर्णशोभनाय कुन्तलालङ्करणाय वा?

मालविका।—(सलज्जम्) कर्णरञ्जनं कर्णिकारं भवेत्तु प्राप्यं कर्णजपायाः तरलिकाया एव।

तरलिका।––कथं तिरस्करोषि मां कर्णाटकामिनीम्? त्वच्चरणचारण चक्रवर्ती·········(इत्युक्त्वा जिह्वाकर्तनं कृत्वा दन्तैः)—श्रीविष्णुस्मरणं करोमि·········त्वन्नैपुण्यमुग्धो युवराजो विदग्धमाधव इव यच्छतु ते राधिकात्मिकायै स्वकिरीटकलापम्।

मन्दारिका।—(शिरश्चालनं कृत्वा) नैवं युक्तं स्यात् प्रेमाभिज्ञानप्राप्तस्य!



सालक्तकं करोतु स पादपल्लवं
विम्बाधराल्लभेत मुखामृतं तथा ।
चित्तारुणात्मनश्च निजं रञ्जयन्
प्रेमाञ्जलिं ददातु सगद्गदोक्तिकः ।।११३

मालविका ।—(छद्मकोपं नाटयित्वा) गच्छामीत श्चटुलरसने ! न केवलं यो वन्दनीयं लघयति श्रृणोति तस्मादपि यः स निन्दाभाजनम् । (गन्तुमुपक्रमते)

सिद्धार्थः ।—(आत्मगतम्) किमिव हि न शोभनं सव्रीडकोपवतीनाम् ! नूनं चित्तचाञ्चल्यकारिण्येषा नृत्तपटीयसी ।

कुतोऽस्ति वल्ली लुलिताऽपि जङ्गमा
क्व निस्वनै र्वा मुखरा तडिल्लता ।
प्रफुल्लकान्तिः किमिति प्रियंवदा
द्वयीं चलन्ती जयते पदाङ्गुलैः ।११४

(प्रकाशम्) नावमन्तुकामा मां कदापि मन्दारिका । चटुलायाः परिहासविजल्पितं परमार्थेन न ग्रहणीयम् । अतो मालविके ! नास्ति प्रयोजनं स्थानत्यागेन तव ।

अलं मृगाक्ष्या भ्रुकुटीभ्रमेण
कथं नु सख्याः परिहासशङ्का ।
क्व निर्झरिण्या श्चटुलोर्मिफेनः
क्व पल्ललापो व्यभिचारपङ्काः ।।११५

तरलिका ।—(मालविकायाः कर्णे कथयित्वा जनान्तिकम्) मन्दारिके ! किं कुरुषे त्वं वासकशय्यारचनम् ? भूयिष्ठां क्लान्तिमापन्ना सखी मालविका नृत्यश्रमात् ।

मन्दारिका ।—खण्डिताऽहं कथम् ........

तरलिका ।—(ओष्ठाधरस्योपरि तर्जनीं स्थापयित्वा) त्वं यापयसि कालं सखीविनोदने मन्यथमन्दिरेऽत्र ।



मालविका ।—(तरलिकाम् अङ्गुल्या तर्जयन्ती) नाहं गन्तुं शक्नोमि पादमेकमितः ।

मन्दारिका ।—कथमेतत् छलात्मिके ! क्षणपूर्वमेव त्वं चलितुं प्राक्रमथाः । मुहूर्तमात्रेण मारुतो वहति दिगन्तरात् । अपि पवनदूतस्ते विपरीतमार्गशरणार्थम् आदिशति ?

तरलिका ।—तत् सन्निहितात् सरसः पद्मपत्राण्यानीय शयनं विरचय मन्दारिके ! मा स्म सख्याः प्रतीपं गमः ।

मधुवनसरसो जलमतिसरसं
नयनरुचिकरं नलिनमपि तथा ।
ललितदलमियं भृशमभिलषते
सरलतरुतले कुरु सुखशयनम् ॥११६

मालविका ।—पश्य पश्य ! तरलिकापदपीडधन्यो रक्ताशोकः पुष्पशोभां तनोत्यपूर्वाम् । आ स्कन्धात् पल्लवपुटेष्वपि विकसितानि कुसुमानि । अशोकवृक्षतलमेव संश्रये ।

चन्द्रातपं रचयिता घनपत्रपुञ्जैः
श्रान्ते विधास्यति शमं मम गात्रयष्ट्याः ।
सर्वाङ्गभूषणकृते सुमनांसि दत्ते
सौख्यं स्वतो जनयति प्रचुरं ह्यशोकः ॥ ११७

सिद्धार्थः । (स्वगतम्)—कामिन्यः स्युरनायासलब्धसुखाः । न जानन्ति तु विलासरता जनाः सुखपुष्पगर्भस्थितं विषादकीटं मर्मघातकम् । न मया स्थातव्यं क्षणमात्रमिह ।—

विशोच्यप्रमोदैः श्रितो मर्त्यलोकः
क्व वा शष्पभूमिर्न पुष्णाति नागम् ।
अशोको नियत्या भवेन्नः सशोको
रमण्याश्च रागः प्रपन्नो विरागम् ॥११८

(नेपथ्यमुद्दिश्य प्रकाशम्)—कः कोऽत्र भोः ?



तरलिका ।—न समाश्रयते युवराजो रम्याशोककुञ्जं मालविकासनाथः ? किं सर्वाः सखी विहाय यात्यन्यत्र भवान् ? नास्माभिः क्लेशः कारितो राजनन्दनस्य । तत् कथं निष्ठुरवत् विताडयसि सिद्धार्थ असिद्धार्था-श्चित्तमोदजनयित्रीः ?—

चिकीर्षवो वयमिह चित्तरञ्जनं
यथार्हणं तनुवचनैश्च मानसैः ।
अतस्त्वया परुषकृतं विगर्हितं
धिगीप्सितं पुरुषजनं द्विषं स्त्रियः ।।११९

मन्दारिका ।—हा हताऽस्मि मन्दभाग्या ! आत्मकामनामपि विसृज्य प्रियसखी-कृते निष्ठुरस्य चित्ततोषाय प्राचेष्टे तथापि फलमीदृशं लब्ध-मस्माभिः । को नु प्रीतिपुष्कलः सान्त्वयति अस्मानबलाः खलताविवर्जिताः ? —

कनकाङ्गरुचं हि कुरङ्गमा
कल्पतरुं परिकल्प्य यमार्षीत् ।
न फलं कुसुमं स तु यच्छति
काऽत्र कथा बत वाञ्छितवृष्टेः ।।१२०

एहि तरलिके ! आयाहि मालविके ! स्थानत्यागेनैव परिहर्तव्य एतादृशः क्रूरकर्मा ।

मालविका । ( सनिःश्वासम् )—सखि मन्दारिके ! कर्कशवाक्येनालम् । ममैव दुर्दैवं सूच्यतेऽत्र न तु निष्कारुण्यं निष्कलङ्कचरितस्य प्रेममूर्तेः सर्वार्थसिद्धस्य ।—

सूर्यालोकं दिवसरमणं चन्द्ररश्मिं क्षपार्च्यं
शम्पाज्योति र्वितरति नभः शस्यदां नश्च वृष्टिम् ।
उल्कापातैः कमपि यदि तद् दुःखदीर्णं विधत्ते
न त्वाकाशं शपति विबुधो निन्दति स्वीयभाग्यम् ।।१२१

सिद्धार्थः । (स्वगतम्)—कृपापात्रमेव मालविकेयम् अपापविद्धा बालिका । दुःखं सञ्जातं मे तदार्तिजननात् ।



तरलिका ।—आगच्छ मालविके ! यास्यामो निजनिलयानि विदीर्णवक्षसो वयं भाग्यविमर्दिताः । एहि मन्दारिके सत्वरम् ।

(समन्दारिका तरलिका कतिपयपदानि गता)

मालविका ।—कष्टं भोः ! दक्षिणचक्षुषि मम पतङ्गः प्रविष्टः । पन्थानं द्रष्टुं न शक्ये न वा स्वहस्तमपि ।

सिद्धार्थः । (सावधानम्)—उपविशात्र चम्पकवेदिकायां सुचरिते ! शलभं निर्गमयामि पक्ष्मतलात् । (वामकरेण मालविकाया मुखं गृहीत्वा दक्षिणकरेण चक्षुरुन्मीलयति) न पश्यामि पतङ्गम् । निर्गतः स्यात् स्वयमेव ।

(तरलिका मन्दारिका चोच्चैर्हसतः)

मालविका ।—स्वयमहं पतङ्गी वह्निवक्षो विविक्षुः । न दयते मामपि पुण्यप्रेमाश्रयः सिद्धार्थः ? रोमहर्षो जातो मे सर्वाङ्गेषु तव स्पर्शनादेव कान्त !

सिद्धार्थः । (सप्रकम्पम्)—तत् प्रवञ्चितोऽहं त्वया छलननिपुणे किशोरि ?—

नाद्यापि नताङ्गि त्वं यौवनसान्द्रा
नेत्रेऽमृतवर्ति दिव्यं रुचिरास्यम् ।
किन्तूरसि कुम्भः कूटासवपूर्णो
हा हन्त छलात्म प्रेक्ष्यामलरूपम् ॥१२२

मालविका ।—मायातनय, नैषा मायाकन्या छलयति त्वां स्वतः । अनुकम्पाभाजनमहं मन्त्रिवरप्रेरिता । क्षमस्व माममलचरित ! (निष्क्रमणोद्यता पादत्रिकं गत्वा पुनः)—निचुलकं मे पतितं तव पदप्रान्ते । कृपया यच्छ मे तत् । (क्षणं विचिन्त्य) न हि नहि ! तिष्ठत्विदं तवानुग्रहस्य मम पराभवस्य च अभिज्ञानम् ।—

यदि मे स्मरसि प्रभो सकृद्
यदि ते चित्तमतः कृपान्वितम् ।
स्पृश हि प्रसवैः कराङ्गुलै-
र्मम मर्माश्रुचितं निदर्शनम् ॥१२३

(द्रुतपदेन निष्क्रान्ता तरलिकया मन्दारिकया च समम्)



सिद्धार्थः ।—व्यथितोऽहं भूयिष्ठेन । न कस्यापि दुःखकारणं भवितुमिच्छामि । परन्तु विसदृशं नाचरति कदापि शुद्धोदनसुतः । (विचिन्त्य)—महामात्येन प्रेषिता हि वनिताजना मन्मोदनार्थम । (तिक्तहासं हसित्वा)—तन्मे पितृदेव एव प्रणोदयिताऽत्र ! ईदृशेनोपचारेण मां प्रीणयितुं यतते सः । अहो ! दुर्मोच्यं खलु संसारबन्धनम् । तथापि न विलम्बनं सोढुं शक्नोमि । अद्यैव निशीथे गृहान्निर्गच्छामि । पत्नी यशोधारा क्रन्दिष्यति रात्रिन्दिवं रोदिष्यति च शिशुतनयो राहुलः । विषादसन्तप्ता स्यान्माता गौतमी पिता च मे पतिष्यति दुःखमहार्णवे । प्रजाजनाश्च मम विरहे यान्ति शोकदीनताम् । परन्तु जीवार्तिनाशहेतवे साधना मामाह्वयति निरन्तरम् । आत्मजनसुखार्थं कथं परित्यजामि आजन्मपोषितं लक्ष्यम् ?—

संसारः प्रसभं हि यन्त्रयति मां रात्रिन्दिवं बन्दिनं
जीवार्तेः परिमोक्षणाय तु कथं यत्नं करिष्ये गृहे ।
पत्नी पुत्रवती पिता च जननी क्रन्दन्ति मे बान्धवाः
सन्न्यासं शरणं तथापि विवृणे रोरुद्यमानः स्वयम् ।।१२४

वन्दे प्रथमं जन्मकारणं कीर्तिलाञ्छनं शुद्धोदनम् । स्मरामि नाममात्रभूतां जननीं मायादेवीम् । श्लिष्यामि स्नेहसिक्तहृदयां मातृष्वसारं जननीकल्पां गौतमीम् । प्रेमाञ्जलिं दास्ये पतिगतप्राणायै यशोधारायै बाष्पसपर्यम् । चुम्बामि वदनसरोजं स्नेहपुत्तलस्य राहुलस्य । अभिनन्दये विदायकाले सकलपरिजनान् शुश्रूषामग्नचेतसः । नमस्करोमि प्रकृतिपुञ्जं राजभक्तं सुचरितम् । स्वस्ति च स्वनियोगरतिभ्यो मालविकादिसखीजनेभ्यः ।—

मुदमतिमधुरां प्राप्णुवन्तु प्रजाः
सकलपरिजनै र्लभ्यतां श्रीस्तथा ।
वसतु चिरसुखं शाक्यराजाश्रितं
निखिलशुभकरश्चास्तु मे निष्क्रमः ।। १२५

( कतिपयपदानि गत्वा )



न स्ववशमस्ति मे देहम् । दृष्टि र्बाष्पवशं गता स्फुरति नासिका हृदयं तथा प्रकम्पते त्वक् चैव परिदह्यते । प्रियजनत्यागचिन्तनं वैक्लवं गमयति मे सर्वाङ्गं मानसं च ।—

हा हन्त मां भाग्यप्रवञ्चितं मूढं
बाष्पाम्भसा यस्य श्लथं मनो भूयः ।
वक्षो भृशं कम्पान्वितं च साकूतं
स्तम्भायते भूमौ पदद्वयं प्रायः ।। १२६

न तथापि परिहास्यति सत्यमार्गम् अयं जनः । अन्तिमक्षेमङ्करो भवतु मे पन्था विघ्नपूर्णोऽपि ।—

पदे पदे स्युः शतकण्टकानि मे
किरन्तु मार्गे करकाश्च देवताः ।
तथापि सर्वं परिहार्य साध्वसं
लभे हि दिष्ट्या परमं सुखामृतम् ।। १२७

आत्मचित्तकलुषं प्रथमम् अपनोदयामि ।—

विश्वसरश्चेत् स्वपद्मपुटके
रक्षति दिव्यं स्यमन्तकमणिम् ।
हर्त्तुमहं तं श्रयामि सरणिं
नश्यतु दीप्त्या ममान्तरतमः ।।१२८

( दृढपादक्षेपेण निष्क्रान्तः )

— इति चतुर्थोऽङ्कोऽभिनिष्क्रमणं नाम —





## पञ्चमोऽङ्कः

### —विष्कम्भकः—

(ततः प्रविशति केशगुच्छहस्त श्छन्दकः)

छन्दकः। (सविषादम्)—अहो ! महत् कष्टमापतितम्। सान्द्रतामस्यां रजन्यां तृतीयप्रहरे गृहं त्यक्त्वा वनं प्रातिष्ठत मत्प्रभुर्युवराजः। प्रमोदकानने मामाहूय उक्तवान् स ह्यः—प्रिय छन्दक! अद्य निशीथ एव गृहान्निर्गच्छामि सन्न्यासाश्रयार्थमिति। यथोक्तमेव स सुषुप्तां पत्नीं पुत्रञ्च स्वप्नहासमादृत्य गृहाद्विनिर्गतः। नैरञ्जना-



तीरस्थवृक्षमूले तुरङ्गादवतीर्य निशितनिपातेन मत्करवालेन स्वकुञ्चितकेशदाम कर्तयित्वा मम हस्ते समार्पयत् माञ्च प्रावोचत् —गृहाण मे चिकुरनिकुरम्बं सखे विदायाभिज्ञानमिव यन्न शोभते सन्न्यासिमूर्ध्नीति । तदनन्तरं बाष्पार्द्रलोचनः सुमधुरवचनेन चाब्रवीत् प्रियवाजिनं कण्ठकं राजधानीं निर्वर्तयेति । तस्य मुण्डित-मस्तकं दृष्ट्वा करुणं वचश्चाकर्ण्य कण्ठकः सर्वं विदित्वेव व्यमुञ्चद् भृशमश्रु । मामाश्लिष्य प्रेमावतार उक्तवान् कापिलवास्तु प्रत्या-वृत्य सर्वं कथय मे पितरौ परिजनांश्चेति । अथ स निमेषमात्रेण गभीरमरण्यगर्भं प्राविशत् सकृत् पश्चाद् दृष्टिमिन्दीवरार्चिषं निक्षिप्य हस्तमुत्थाप्य च वराभयसूचकम् । प्राञ्जलिरहं स्थाणु-वत्तत्रातिष्ठं सुचिरम् । तुरङ्गह्लेषारवेण उच्चकितो दृष्टवान् ऊर्ध्वपादनिक्षेपं तुरङ्गवरं प्राणांस्त्यजन्तं सहसा भूलुण्ठितम् । धन्यः स जवधनः प्रभुभक्तो यः क्षणमपि सिद्धार्थविरहं सोढुं नाशक्नोत् । तरुलताश्च विहङ्गक्रन्दनमुखरा वियोगसंवादं प्रकाशयन्ति स्मेव ।—

चक्रन्दोच्चै स्तुरङ्गमो विहगविरुतं चक्रन्द च वनं
प्रारोदीद्वीचिलापैः श्रवणकरुणैः सान्तर्जलनदी ।
दिङ्नार्यश्च प्रबुद्धाः करालरजनौ हैमाश्रु मुमुचु-
र्नाश्मात्मा छन्दकस्तु प्रहतकरणो बाष्पाम्बुनयनः ॥ १२९

(अश्रु मुञ्चन् परिक्रामति)

निष्करुण छन्दक ! रोरुद्यस्व त्वम् आ मृत्योः । सहायको जातस्त्वं वनं गन्तुकामस्य युवराजस्य । परन्तु कथं मया प्रभोरादेशो न पालनीयः सर्वथा प्राणव्ययेनापि ? अस्ति मे जीवनस्य प्रयोजनं वार्तावहनाय सर्वत्र । तथापि—

धिङ् मे प्राणधारणं जगति शाक्यानियोगे
धिङ् मे मर्ममर्मरं विरहितं यत्त्वदीर्णम् ।
जिह्वां हन्त वाङ्मयीं खरतमे विप्रयोगे
हा प्रेष्यचारिणं विपदि चात्मार्थकीर्णम् ॥ १३०



(ततः प्रविशति दण्डपाणिर्वृद्धः प्रजाजनः)

वृद्धः ।—कः कस्त्वं भोः ? कथं रोरुद्यसे विकीर्णमूर्धजो वनपथप्रान्ते ? कीदृशं कष्टमापतितं तव ?

छन्दकः ।—आर्य, प्रभुर्मे सन्नासवृत्तिं श्रयमाणः संसारमत्यजत् सहसा ।

वृद्धः ।—एष खलु सनातनो धर्मो वानप्रस्थावलम्बिनः । वासनाविषजर्जरोऽहं स्वयं न शक्नोमि इत्थमाचरितुं परन्तु प्रशंसयामि तमेव नमामि च यः सन्न्यासमाश्रयते मोक्षलाभार्थम् ।

छन्दकः ।—भाव, न मत्प्रभुर्वार्धकमुपनीतः । युवा स सदारपुत्रो गृहस्थधर्मा । परन्तु भवादृशं जरापीडितं तथा रोगार्तान् मृत्युग्रासपतितांश्च दृष्ट्वा सर्वदुःखविमोचनाय स यौवराज्यमपि निर्मोकवत् परिहाय वनं प्रातिष्ठत ।

वृद्धः ।—नाहं सुष्ठु श्रोतुं क्षमः । स युवराज आसीद् इत्येव किं त्वमुक्तवान् ।

छन्दकः ।—वाढं पितः ! मत्प्रभुः शुद्धोदनसुतः सर्वार्थसिद्धो गौतम एव नान्यः । अहं च छन्दकनामा सारथिस्तस्य ।

वृद्धः ।—मा मैवं वद छन्दक ! सर्वे वयं प्रकृतिजना राजपुत्रे सिद्धार्थे भृशं स्निह्यामो वाञ्छामश्च नित्यं तस्य राज्यलाभम् । कामं राजर्षिः शुद्धोदनः प्रजागतप्राण स्तथापि सर्वेषामस्माकं प्राणपुत्तल एव महौजाः कृपासिन्धुः सिद्धार्थः । अद्यापि स्मरामि भास्वरमूर्तिं तस्य यदा स पादचारेण नगरवर्त्मसु भ्राम्यन् सर्वमपश्यत् कौतूहलपर्ण-लोचनः ।—

अद्यापि तं नृपसुतं प्रकृतिप्रभुत्वान्-
मार्गेषु चित्ररथवत् तिमिरं नितृह्य ।
उद्भासयन्तमवनीं पुलकार्चिहासै-
र्वृन्दारकं नरनुतं शमिनं स्मरामि ।। १३१



(अश्रु विमुच्य) —वृद्धानां जीवनमतिशयेन दुर्वहम् । अहर्निशं श्रृणुमो वयं प्रियजनवियोगवार्ताम् । न जाने कदा मे भवति जीवलीलाया: समाप्तिः !

छन्दकः ।—महाभाव, सुपथगामिनो वार्धकं क्लेशबहुलमपि वरेण्यमेव ।—

कालं ये यापयन्ते मनुजशुभकरे कर्मणि सदा
येषां किञ्च स्वधर्मे समयविलसनं स्यादनलसम् ।
जीर्णा कम्प्राङ्गयष्टिर्न भवति महतां शोच्यजनिका
मन्ये तेषां जराऽपि प्रचितसुखरसा चित्तमजरम् ।। १३२

परन्तु देवः सिद्धार्थः सर्वार्थसिद्धये विश्वजनार्तेरैकान्तिकनाशाय साधनार्थं कौषेयवासो गृह्णाति स्म ।

वृद्धः ।—अतो वृद्धानामपि प्रणम्यः सः । तथाप्यहं वदामि पितृशोकजननं तद्विधं न मे सम्मतम् । वृद्ध एव वेत्ति वार्धके पुत्रवियोगदुःखातिशय्यम् । क्षम्यतामयं जनो वैदग्ध्यविहीनो यथार्थविवक्षुः । स्वस्ति पुत्राय छन्दकाय जयतु च राजपुत्र स्तपस्याधनः !

(निष्क्रान्तः स्खलितपदेन)

छन्दकः ।—विलम्बितेनालम् । परन्तु मम च पादौ वृद्धचारं लब्धवन्तौ । कथं मे कृष्णमुखं प्रदर्शयामि महाराजम् ? किं वा वदामि पुत्रवत्सलां देवीं गौतमीं ? कथङ्कारम् आह्वयति मां साध्वी पतिशोकविह्वला राजवधू यशोधारा ? किमर्थं वा राहुलमनाथशिशुं संगच्छे क्रीडोद्याने ? किमुत्तरं दास्ये परिजनान् यदा ते सोत्सुकाः पृच्छन्ति—कुत्र गतः प्रभुः प्राणमन्दिराधिष्ठाता नः सिद्धार्थ इति । मरणमेव श्रेयः, प्रतिभाति न तु बान्धवानां विगर्हणम् ! हा हतोऽस्मि दैवघृष्टः प्राक्तनदुष्कृतभोक्ता ! कथं प्रविशामि एकाक्यहं कापिलवास्तुराजपुरं सिद्धार्थतिरोहितम् ?—



सन्न्यासार्थं वनमुपगते सूर्यवंशप्रदीपे
सान्द्रा रात्रि र्दिवससमये संश्रिता शाक्यराज्यम् ।
शून्या पन्ना प्रकृतिबहुला हर्षदा राजधानी
वज्राघातो दहति सहसा सद्म शुद्धोदनस्य ॥ १३३

भग्नदूतोऽहं भग्नोत्साहः स्वनियोगं करिष्ये कथम् ? अथवा भवितव्यं को वा खण्डयितुं क्षमः ?—

नियत्यार्पितो मे करे कर्मभारः
कथं पालयिष्ये नृशंसं विधिं तम् ।
अथार्यप्रजाभि र्नियोगो हि साध्यो
निजं मर्म यत्र क्षरेद्वाऽपि रक्तम् ॥१३४

धर्म एव रक्षतु धर्मज्ञानवञ्चितम् !

( धीरपादेन निष्क्रान्तः )

—इति विष्कम्भकः—



(ततः प्रविशति ध्यानस्थः सिद्धार्थो ज्वलदग्निसम्मुख स्तपोवने)

सिद्धार्थः । (अस्फुटस्वरेण)—

जगदन्त-विधारण-कारण हे
ज्वलदर्चि-निभासन-दाहन हे !
जलदास्य-विमोहन-पावन हे
जनदुःख-निवारण-शासन हे !! १३५



(नेत्रद्वयमुन्मील्य)—जय सृष्टिस्थितिलयविधायक जगत्पते ! कथं नाद्यापि लब्धो मया ते कृपालवः ? सुचिरमहं तपोवनात् तपोवनान्तरं भ्राम्यमाण आसं बीजमन्त्रलाभार्थम् । अनुःस्वार-विसर्गसमृद्धं मन्त्रजातं श्रुतं परन्तु न कस्यापि निगूढमन्त्रस्य सम्यगर्थः प्रस्फुटः । न कोऽपि च भगवन्तमहं दृष्टवानिति प्रावोचत् । न्यायशास्त्रविषयकै स्तर्कै र्मुखरितानि विद्यानिकेतनानि निरन्तरम् । पण्डितैश्च सार्धं विचारेष्वपि प्रवृत्तोऽहम् । तथापि येन द्वारेणाहं प्रविष्टस्तेनैव द्वारेण वितण्डाप्रतिध्वनितेन चित्ततोषणमप्राप्य विनिर्गतश्च ।—

षड् वर्षाणि मया सुपण्डितपदे विज्ञापिता मार्गणा
कुत्रास्तीह नृणां चिरार्तिहृतये प्रज्ञा मनःसान्त्वना ।
ऊर्णाजालमहो कुतर्करचितं दृष्टिं ववारासितं
निष्क्रान्तो विफलार्थ एष नियतं तीर्थात् प्रवेशाध्वना ।।१३६

तत् को भवति मे सहायो विषयेऽस्मिन् ? चिराचरितेन पथा ध्यानं चाहं कृतवान् दारुणे शिशिरकाले ह्रदजले तुहिनशीतले आवक्षोनिमग्नो ग्रीष्मकाले च प्रचण्डातपे काष्ठाग्निं प्रज्वाल्य चतुष्पार्श्वम् । किं मया न साधितम् अद्यापि कठोरतमं तपः ? जय विश्वविधातः ! घोरतरं तपश्चारणं करिष्येऽतःपरम् ।—

इहैव भुवि शुष्यतु प्रतपसा शरीरं मम
प्रयातु च परां मनोऽविषयतां सबाह्येन्द्रियम् ।
ज्वलेन्नियतमात्मभा निपवनाङ्गने दीपवद्
वृणीय मरणं शुचः प्रशमनं लभेयं हि वा ।।१३७

( पुनस्तिष्ठति ध्यानस्थः )

( ततः प्रविशति धनुर्धरो व्याधः कश्चन )

व्याधः ।—क एष तपस्वी ध्यानमग्नः ? तं निकषा निर्भयम् उपविष्टः पारावतो यमहं हन्तुं नाशक्नवम् । पदतले सुप्तवद् आस्ते विशालो विषधरश्चक्रफणः । मूर्तमृत्युरपि न भीषयते तम् अथवाऽऽत्म-



लीनो न जानाति भुजङ्गोपस्थितिम् । हिंसया जीविकानिर्वाहं करोम्यहं कथं नु ज्ञायते अहिंसापराक्रमो मया ?—

हिंस्रो व्यालो न विभीयान्महर्षेः
सर्पाद्ध्यानी न लभेत प्रकम्पम् ।
व्याधस्यात्र प्रतियोगी कपोतः
शङ्कां नात्ते मरणादप्यहिंसः ॥१३८

तत् किं करोम्यत्र ? न शक्ये मुनिशरणागतं कपोतं निहन्तुम् । (विहस्य)—अद्य भक्ष्यो धनुर्गुण एव मे ! अज्ञातनामानम् अजातशत्रुं वन्दे तथापि ।

सिद्धार्थः । (ध्यानमग्न एव जल्पति)—

प्राणा यथा प्रिया नृणां तथैव सर्वप्राणिनाम् ।
जीवानां प्राणनाशेन स्वर्लोकं को नु यास्यति ॥१३९

व्याधः । (सचकितम्)—किमेष मर्मज्ञ एव ? परन्तु न कामये स्वर्गं प्रयातुमहम् । सुचिरं मुनिसन्निधाने तिष्ठतो मे वैराग्यलब्धस्य त्वनाहारेण परलोकप्राप्तिं र्भवेत् । अतः स्थानत्यागेन सज्जनमपि जहामि ।

जय जय हि मुने जयतां तव तपः
कुटिलमतिरयं न तु वेद परमम् ।
शरणमपि गत-स्तव कालभुजगो
जितनिखिलरिपो क्रियतां मम शुभम् ॥१४०

( नमस्कृत्य निष्क्रान्तः )

सिद्धार्थः । (ध्यानमग्नः) —

अहिंसाभूमौ वर्तते धर्मकल्पशाखी
प्रसूनं तस्मिन् पेशलं पुण्यरूपमिष्टम् ।
फलं खादित्वा तस्य वै मानवैररिष्टं
सुधास्वादश्च प्राप्यते मर्मतापनाशी ॥१४१

(पुनरपि गभीरध्यानमग्नः)



(ततः प्रविशति तरुणी सुजाता कलसीहस्ता)

सुजाता ।—(गायति)

अञ्जना-नदी-जले खञ्जना सुशीतले
दर्दर्श सायं नु हिंस्रनक्रम् ।
तीर-शाल्मलीतले श्यामशाद्वलाञ्चले
सुनीलरत्नाभकृष्णचक्रम् ।।

न त्वं चारुव्रते सुजाते न
कुर्यास्ते भीरुपादपातेन
प्रकम्पान्वितं पन्थानं भुजङ्गश्रितं ते वक्रम् ।।१४२

(सिद्धार्थमवलोक्य सविस्मयम्)—हंहो ! महर्षिः कश्चन ध्यान-मग्नः शाल्मलीतले वल्मीकपार्श्वे । अहो ! यौवनेऽपि मुनिवृत्ति-माश्रित्य निजगृहं पर्यहरदेष कन्दर्पकान्तिः पुरुषः । विच्छुरति दिव्य-द्युतिरस्य सप्रतिभललाटान्नेत्रोत्पलद्वयाच्च । रक्तपुष्पाणि प्रकिरति द्रुमोऽस्य पुण्यपदतले । (सहसा सभयम्)—कृतान्तसदृश स्तीव्रहला-हलधारी कृष्णसर्पः स्वपिति पादुकाद्वयस्योपरि । वहवः प्राणिनो निहता एतस्यैव महानागस्य दंशनेन साम्प्रतम् । किं करोमि ? किमहं पलायिष्ये मुनिवरं न प्रबोध्य ? परन्तु ध्यानभङ्गे सञ्जाते यदैव स पादुकयोः चरणे स्थापयति तदैव फणधर स्तं नूनं दंक्ष्यति। यदि किमपि नाहं करोमि, तथापि सर्पस्तं दंष्टुं क्षमः शब्दमात्रं श्रुत्वा । निचारविमूढा जाताऽहं मन्दधीः । (पर्यवेक्ष्य)—मन्ये जागर्ति व्यालरूपो महाकालः । मामपि स ताडयितुं शक्नोति । तत् प्रथमं नैरञ्जनां गत्वा सलिलमाहरामि पश्चात् पश्यामि पुनः सर्पव्यापारम् । (विचिन्त्य)—किमहं महर्षिं मृत्युमुखे अर्पयामि निजप्राणभयात् ? नाहं भीता परन्तु प्रमाद् यदि नागस्य रोषं जनयामि तर्हि स मुनि-मेवादौ नूनं दशति । मुनिश्च महौजा स्तपःप्रभावेण कृतान्तसदृशं



सर्पमपि वश्यतां नेतुं प्रभवति । अतः स्थानत्याग एव विधातव्यो मया बलहीनया ।

(वारं वारं सिद्धार्थं प्रति दृष्टिं निक्षिप्य निष्क्रान्ता शङ्काव्याकुला)

सिद्धार्थः ।—(ध्यानस्थ एव भाषते)—

"श्रृण्वन्तु विश्वे अमृतस्य पुत्रा
आ ये धामानि दिव्यानि तस्थुः ।
वेदाहमेकं पुरुषं महान्तम्
आदित्यवर्णं तमसः परस्तात् ।।"

हा हन्त ! न तु विज्ञातो मया ईदृशः पुरुषोत्तमः । किं तर्हि विफलं मे तपश्चारणं वन्ध्या च कठोरसाधना ? (क्षणं तूष्णीं स्थित्वा पुनरपि)—कथं प्रेमस्वरूपो जीवदुःखं सहते ? कथं न सर्वशक्तिरीश्वरः कष्टजातं त निवारयति ? कथं स व्याधिं जरसं मरणं च प्रेरितवान् ?—

प्रेमात्मा चेद् भवति भगवान् दुःखजातं कुतस्तद्
व्यर्थायासो यदि स भुवने तर्हि कः सर्वशक्तिः ।
शक्तिः प्रेम द्वयमपि भवेद् यत्र धातु र्गुणाख्यं
किंस्विन्मिथ्या चिरमनुमिता विश्वनाथस्य सत्ता ।।१४३

अपि च ब्रह्मैव आत्मा कथ्यते । परन्तु कीदृशः स्यादात्मा ? मनुष्यचिन्तनानि क्षणिकानि भवन्ति । अप्यस्ति द्रव्यसत्त्व आत्मा चेतनारूपी ? विकारहीनो निर्गुणः कथङ्कारं सम्भवति आत्म-नामधेयोऽस्तित्वमात्रस्वरूपः ? —

आत्मा कोऽयं यो भवति मनसो भावनापुञ्जधारी
चिन्तामात्रं तु क्षणिकगतिकं वुद्बुदास्रं तटिन्याः ।
किं ब्रह्माख्यातं गुणविरहितं चिन्मयं शुद्धसत्त्वं
को विश्वस्रष्टा सगुणपुरुषो ब्रह्मणः किं स भिन्नः ।।१४४

(पुनरपि गभीरध्यानमग्नः)



(ततः प्रविशति भीरुचारेण सुजाता कलसीहस्ता)

सुजाता ।—(पर्यवेक्ष्य) न ध्यानभङ्गो जातो मुनिवरस्य । परन्तु कालनागं न पश्यामि कुत्रापि । तपःप्रभावेण मन्त्रमुग्धवद् अतिष्ठत् स पश्चात् स्थानान्तरं गतः । सुचिरम् अनाहारात् क्षीणीभूताङ्गस्तापसः कृशतनुस्तस्य तथापि देदीप्यते कृशानुरिव । गृहं गत्वा किञ्चिदाहार्यम् आनेष्यामि तं क्षुधापीडितम् ।—

किं भोज्यादि श्रुतिधृतिरिक्तापक्वं
ग्राह्यं स्यान्मे द्विजकुलसम्भूतर्षेः ।
भक्त्युत्सर्गं वनचरहस्तात् सर्पि-
स्त्यक्षत्याहो परमपवित्रो वह्निः ।।१४५

पुनरागमिष्यामि सत्वरमेव । यदैव जागर्ति पुण्यव्रतो नूनं स क्षुत्पिपासार्तो भवेत् ।

(धीरपदेन परिक्रामति कतिपयानि पदानि गत्वा मृदु गायति)—

नित्यमा जन्मनः कुत्र हा मन्मनो
मृग्यसि चिदालोकरूपम् ।
यद्यपि क्षीणधि प्रेप्ससि क्षीरधि-
मर्चसि तु मण्डूककूपम् ।।
हा सुधावाञ्छने राजसूयाङ्गने
भुज्यस अजापेयसूपम् ।
चन्द्रिका-यामिनी रंस्यते कामिनि
ज्वालय हृदामोदधूपम् ।।१४६

(गायन्त्येव निष्क्रान्ता)

सिद्धार्थः ।—( उन्मील्य चक्षुषी )—हृदयम् अकारणपुलकेन स्पन्दते स्फुरति च कोरकवन्-नवारुणरश्मिना । स्मृतौ श्रवणयोश्च प्रतिध्वनतीव तानलयनिक्वणम् ।—



सुरस-सङ्गीतमूर्छना दूरादिव सरण्या
अमृतबिन्दुस्रवार्चना संयाति मम कर्णम् ।
करुणकण्ठी दिगङ्गना तृषणाकुलशरण्या
जपति मन्येऽत्र सान्त्वना-मन्त्रस्य मधुवर्णम् ।।१४७

(विहस्य)—दिङ्नागो यथा दिग्वधू स्तथैव कविकल्पनासृष्टिमात्रम् । किं ममान्तरमेव गुञ्जति भ्रमरवत् प्रफुल्लवनान्यामत्र ? अथात्मगन्धेन प्रमत्तवद् भ्रमामि वनाद् वनान्तरं कस्तुरीमृगो यथा ? यन्मे मर्मवाञ्छनं किं तद् भ्रमात्मकं किमुत स्वप्नविलसनम् ?—

प्रमत्तवत् चराम्यहं वनाद् वनान्तरं चिरं
यथैव कस्तुरीमृगो मधौ स्वगन्धविह्वलः ।
विचारकुण्ठताऽपि मे समाश्रिता न चेत् कथं
प्रलब्धमात्मपीडनं न काङ्क्षितं च लभ्यते ।।१४८

(ध्यात्वा)—कामं ममाभीप्सितं न प्राप्तमद्यापि तथापि नान्यविषयलक्ष्यं मे चित्तकार्मुकस्य ज्याबद्धस्य दृढशिलीमुखम् । अपि च—

वासन्त्यां रात्र्यां भवति विवशवच्चित्तं
श्रेयः प्रेयश्च क्व रहसि मम न ज्ञास्ये ।
अज्ञानान्धस्य श्रवणकुहरयो र्नित्यं
जञ्जप्यन्ते के झटिति हि लभसे वित्तम् ।। १४९

एतत् खलु स्फुटं मेऽधुनापि न केवलं देहकृच्छ्रसाधनया लभ्यते सिद्धिरिति । देहं विना न सम्भवति मनुजस्य तपश्चर्या अतः परित्याज्यक्लेशजननं न कल्पते कदापि श्रेयसे परमार्थाय । स्वस्थं शरीरं साधनमार्गसाहायकमेव न तु विघ्नजनकम् । प्रकृतेः प्रतीपं



१०



नूनं गच्छन्ति त एव ये कारणं विना स्वदेहानि क्लिश्नन्ति पुण्याशया। कुतो नु प्रकृतिम् अतिक्रमितुं शक्नुवन्ति मानवा जीवान्तराणि वा ?—

प्रकृत्या सृष्टा हि प्रणयमनसा कान्तनूतनुः
सुरक्षाकर्त्तुः सा भवति नियतं स्वास्थ्यवरदा।
ददाति स्वास्थ्यं नः सकलकृतिषु क्लान्तिसहनं
तदार्यो देहं स्वं प्रगुणमनुजो नित्यमवतु ।। १५०

मूढेन मया न विशदेन ज्ञातमासीत् प्रागिदम्। दृष्टेः लभ्यते केनापि ज्ञानं तथा कर्मणोऽपरैः।

(ततः प्रविशति खञ्जो बालकः)

बालकः।—नमस्ते तपस्विन्! अपि कुशलं तव ?

सिद्धार्थः।—(सस्मितम्)—बाढं वत्स! कीदृशी ते शरीरवार्ता ?

बालकः।—(सनिःश्वासम्)—खञ्जोऽहं न सुष्टु मम संवादः।

सिद्धार्थः।—मैवं वाच्यम्! खञ्जस्यापि शुभाशुभे भवतः। एतच्च स्मर्तव्यं वधिरत्वाद् अन्धत्वाच्च खञ्जत्वं नाधिकक्लेशकरम्। किं प्रार्थयसे प्रियार्भक ?

बालकः।—नाहमर्भकः परन्तु गोपालो नाम्ना कर्मणा च। गाश्चारयितुम् आगत उरुवेलारण्योद्देशं प्रातः। साम्प्रतं प्रत्यावर्तें सन्निकटस्थायां पल्ल्यां मम कुटिरम्। किं शक्नोषि त्वं वृक्षमारोहितुम् ?

सिद्धार्थः।—किमर्थं गोपाल ?

बालकः।—शाल्मलीशाखाया रक्तपुष्पाणि आहर्तुं कामोऽहं परन्तु खञ्जक इति स्वयं न चेतुं क्षमः।



सिद्धार्थः । (सस्मितम्)—एतन्मात्रम् ? नास्ति प्रयोजनं ममारोहेण । उद्बाहुरेव नातिप्रांशुलभ्याणि चिनोमि कुसुमानि । मनोहराण्येव रक्तपुष्पाणि गोपालस्य सुरुचिं वर्णयन्ति । (नेपथ्ये हस्तं प्रसार्य कतिपयानि पुष्पाण्यादाय)—गृहाण वत्स मे प्रेमोपहारम् । अपि प्रीतोऽसि ?

बालकः । (पुष्पाणि गृहीत्वा सहास्यम्)—अथ किम् । सुकृतं विहितं त्वया मुनिवर आतुरबालकार्थम् ।

सिद्धार्थः ।—नात्मानम् अवमन्यसे ।—

गोपाल गोपावतंस नित्यं स्मितानन
कान्तारवल्ल्यां त्वमेव पुष्पं मनोरमम् ।
वर्णेन वाक्यामृतेन चित्तं प्रकाशय
चारित्र्यरूपं तनोतु विश्वं च सौरभम् ॥ १५१

बालकः ।—सुमधुरं वचनं तवैव महात्मन् ! श्रुतं च मया—

संसारमरुभूमौ स्यु दुर्जनाः कण्टकैः समाः ।
तृषार्ताय जलं दत्ते सज्जनः पान्थपादपः ॥ १५२

(ततः प्रविशति पात्रहस्ता सुजाता)

सुजाता ।—नमामि महर्षिम् ।

सिद्धार्थः । (सस्मितम्)—नाहं खलु महर्षिः परन्तु परमतत्त्वान्वेषी तपस्वी । यद्यपि न महातत्त्वम् अद्यापि मया प्राप्तं सुचिरं तथापि तपस्यते स्म मया ।

सुजाता ।—भवदर्थमानीतं मया स्वल्पं पायसं निजकरपक्वम् । यदा भवान् गभीरध्याननिमग्न आसीत् तदाऽहम् अत्रागत्य भवन्तं दृष्टवती ।



महानागः कृष्णसर्पो भवन्तं प्रणम्य क्षणं पादमूले स्थित्वा पश्चात् प्रतस्थे वनमध्यम् ।

बालकः ।—न दृष्टो मया कदापि स दुराचरः यो गवां शत्रुर्मानवांश्च दशति प्रायेण ।

सुजाता ।—भवतु, मया मन्यते महत्या क्षुधा पीडितः स्यान्महर्षिरिति । अतो निवेदयामि सभक्तितण्डुलाञ्जलिं भवते । किं तद् गृहीत्वा मां धन्यतां नेष्यति कृपाशीलः ?

सिद्धार्थः ।—नूनं गृह्णामि ते प्रीत्युपहारम् आर्ये सुचरिते !

सुजाता ।—कुचरिता खलु नाम्ना सुजाता ।

सिद्धार्थः ।—भगिनि सुजाते ! धन्योऽहमद्य । सत्यं महती क्षुधा बाधते मां परन्तु स्नानमकृत्वा न भुङ्क्षे ते सुधापरमान्नम् । (क्षणं ध्यात्वा) —अस्ति मे वागन्तरं च । त्वमेव अमृतस्यन्दं गीतम् अगाय इति मे प्रतिभाति । अधुनैव ध्वनति मे कर्णयोः सङ्गीतमूर्छनं वीणा-निन्दितम् ।

सुजाता । (सलज्जम्)—अपराध आसीन्मम यदहं भवतो ध्यानभङ्गं कृतवती ।

सिद्धार्थः ।—मा शुच ! विशदव्याख्यां करिष्ये पश्चात् । कृपया तिष्ठात्र क्षणं गोपालेन सह । सत्वरं पुनरागच्छामि नदीजले स्नानं समाप्य । नैरञ्जना निरञ्जनं करिष्यति मे चिरास्नानमलिनदेहम् ।

सुजाता ।—सन्ध्या समायाति । तटिन्यामस्ति भीषणो नक्रः शीतलोदके तथाऽ-वगाहनं न कर्तव्यमधुना ।

सिद्धार्थः । (सस्मितम्)—भगिन्यः सर्वत्रैव पापशङ्काक्लिष्टाः ! मूहूर्तमात्रं प्रतीक्षस्व वाचं च मिश्रय गोपालवचसि मधुरे ।

(निष्क्रान्त स्त्वरितपदेन)



सुजाता । (सुस्मितम्)––अथ, गोपाल, अपि यत्नेन धेनूर्वत्सांश्च पालयसि ?

बालकः । (सहास्यम्)––सुबोधो बालको गोपालो परमयत्नेन गोसेवां करोति यथाप्राप्तं भोज्यं च खादति विना वाक्यव्ययेन । (पात्रं प्रति दृष्टिं निक्षिप्य)––पायसं तु भृशं रोचते तस्मै ।––

श्रेष्ठं नृणामहो भोज्यं सुपायसं
नृत्यन्ति भोजने विप्रैश्च बालकाः ।
प्रार्थी भवेद्यतो गोपार्भकः स्वयं
पुण्याय कल्पते दात्र्या वदान्यता ।। १५३

सुजाता । (सस्मितम्)—सुचतुरो रसग्राही च गोपालः । परन्तु पायसमानीतं मया मुनिवरार्थम् । कथं लोलुभ्यसे मुनिसत्तमाय यदुत्सृष्टं तदेव ? (बालकस्य विषण्णवदनम् आलोक्य)—भवतु, गोपनन्दनस्य प्रीतिजननं शुभदमेव । स्वल्पं गृहीत्वा पलायस्व सत्वरं गृहाभिमुखम् । (पायसं ददाना पत्रपुटे)––

गोपात्मज गृहाणेदं परमान्नं परार्थकम् ।
त्वय्येव तृप्तिमापन्ने तृप्यन्ति सर्वदेवताः ।।१५४

बालकः ।––सर्वं प्रियम् अवाप्नुहि !

(नृत्यन्नेव निष्क्रान्तः)

सुजाता ।––अमृतं बालभाषितं सदैव ।

(ततः प्रविशति सद्यःस्नातः सिद्धार्थः)

आयातु भवान् उपविशतु प्रशस्तोपलखण्डे । शाल्मलीपत्रकृतस्थाल्यां परिवेशयामि पायसम् ।



सिद्धार्थः । (सहास्यम्)—विलम्बेनालम् । (उपविश्य कमण्डलुजलेन हस्तौ प्रक्षाल्य पायसं शनैः शनैर्भक्षयन्)—परमान्नमेव परिवेशितं त्वया सुजाते । भृशं प्रीतोऽस्मि तृप्तश्च भूयिष्ठेन ।

सुजाता ।—किं वदन्नास्त भवान् स्नातुं गन्तुकामः ?

सिद्धार्थः ।—न निगूढतत्त्वं लब्धं मया परन्तु यल्लब्धं तत् हिताय प्रभवति नराणाम् । यथा भोजने तथा शयने भ्रमणे च सर्वत्रैव अत्यन्तं गर्हितम् । संयमविलासव्यापारे च एष हि नियमः । मध्यमः पन्था एव अवलम्बनीयो मानवैः ।—

निन्दार्हं सर्वथा स्याद् विषयरतिमात्रे नित्यशरणं
विद्वांसो वर्जयन्तु प्रकृतिविपरीतं चात्मदलनम् ।
मध्यः पन्था भवेन्नः सुखकुशलकर्मा नन्द-दमयो-
र्दुःखापुण्ये लभन्ते खलु जगति मन्दा भिन्नगतयः ॥१५५

सुजाता ।—मूर्खा नार्यहं न जाने धर्मस्य तत्त्वम् । परन्तु पश्यामि बहवो धर्मव्रताः पूजार्चनै र्देवान् सन्तोष्य रूपं जयं धनञ्च लब्ध्वा परमसुखिनो भवन्तीति । एतच्च श्रुतं मया पुण्यव्रता स्तपस्विनो महता क्लेशेन तपश्चर्यां कुर्वन्ति तेषां हास्योद्दीप्तानि मुखानि च सुखप्राप्तिं विज्ञापयन्तीति । किं नोभयविधाः सुखं पुण्यं वा विन्दन्ति ?

सिद्धार्थः ।—प्रश्नस्ते प्रशस्त एव परन्तु मयैवं विचारितम् । यागपूजाकारिणः खलु स्वार्थान्वेषिणो भोगवासनाविमर्दिताः । पशुवधाङ्गहेतो र्यज्ञानि क्रूरकर्माण्येव भोगलालसामत्ताश्च न परमं चरमं वा सौख्यमाप्तुं शक्नुवन्ति । तथैव पुण्यार्थं स्वक्लेशविधायका अस्वाभाविकं क्षणिकमानन्दं लभमाना अपि नैकान्तिकीं शान्तिं गच्छन्ति । एतच्च चिन्तनीयं क्लेशमात्रं न स्वयं पुण्यजनकं कदापीति । अपि च जीवदुःखविनाशनं हि मम चिरव्रतम् ।



अतोऽहं ब्रवीमि––मध्यमः पन्था एव नराणाम् अनुसरणीयो न तु प्रवृत्तिमार्गो निवृत्तिमार्गो वा ।—

प्रवृत्तिमार्गो नयति मनुष्यं स्वार्थपरनन्दनं
निवृत्तिमार्गः प्रभवति नूनं काल्पनिकशर्मणे ।
अतोऽत्र सन्तः परममुदार्थं संयमविलासयोः
प्रकुर्वतां हि प्रियशुभयोगं विश्वजनशंसितम् ।।१५६

तथापि वदामि––अद्यापि सत्यं रहस्यावृत्तं मे जीवनं चानुत्तर-प्रश्नमात्रम्। न जाने कदा प्राप्स्ये दीर्घवर्त्मनः सीमान्ते स्थिति-स्थैर्यम् !

सुजाता ।—निःसङ्गो भवान् गहनाटव्यां न लभते जनसान्निध्यम् । आगच्छतु मुहूर्तयापनाय लोकालयम् ।

सिद्धार्थः ।—भूतार्थभुक्तवती त्वम् । षड्वर्षाण्येव व्यतीतानि मे दर्शनशास्त्रा–ध्ययने तथा तपश्चर्यायाम् । यामि पुन र्जानपदं त्वया समम् । दिङ्निर्देशं कुरु सुजाते दिगङ्गनोपमे !

सुजाता । (सस्मितम्)—इत इतो महर्षे !

सिद्धार्थः । (विहस्य)—न महर्षिरयं जनः नरप्रेमिको दुःखसन्तप्तः । द्रुतं पदं निधेहि वत्से ! विधावुदिते निशाप्रहरान्ते यास्यामि राजगृहा-भिमुखं शिष्यबन्धुभिः सह पुनर्मिलनार्थम् ।

सुजाता ।—कृतार्था सुजाताऽद्य प्रभो ! (मृदुकण्ठेन गायति)—

उरुवेलावनानीं परिहाय त्विदानीं
व्रजति ऋषिरयं सन्ध्यावेलायाम् ।
विरमय्य प्रकाशं तनुसंख्याभिलाषं
नयति स समयं सन्धाखेलायाम् ।।
कन्ये स्वकपालं मन्यसे विशालं स्निह्यति चेत् सुधीः पल्लीबालायाम् ।।



नरलोके विनोदं　　　　　　　परलोकप्रबोधं

क्षिपति स युगपत् धृत्या हेलायाम् ।

वरदाय प्रणामं　　　　　　　कुरुते सा प्रकामं

विलसति भगवत्-प्रीत्या वेलायाम् ।।

कन्या स्व-सुभालं मन्यते विशालं स्निह्यति चित्सुधः पल्लीबालायाम् ।। १५७

(गायन्त्येव निष्क्रान्ता सिद्धार्थसनाथा)

—इति पञ्चमोऽङ्क स्तपश्चारणं नाम—





## षष्ठोऽङ्कः

### —विष्कम्भकः—

(ततः प्रविशति छन्दकः पथिचारक्लान्तः)

छन्दकः ।—सुचिरमहं युवराजम् अन्विच्छामि स्म तथापि न सन्देशं तस्य लब्धवानद्यापि । अभिनिष्क्रमणस्य परेद्यवि यदाऽहं समाचारम् अवाहयमन्तःपुरं तदा रोरुदारावेण प्रामथ्यत मेदिनी । प्रजाजनानां



नागरिकाणां विलापहेतो-रिन्द्रपुरीतुल्या रत्नोज्ज्वला पुष्पोद्यान-शोभिता राजधानी विषादतमिस्राच्छन्ना बभूव यथा अयोध्यापुरी त्रेतायुगे दाशरथिविरहिता। प्रतिगवाक्षं वराङ्गनास्तथा राजवर्त्मसु पथिका आबालवृद्धवनिता बाष्पाम्भो मुमुचु र्मुहुर्मुहुः। महाराजः शुद्धोदन श्छिन्नमूलकदलीतरुवद् भूमौ पपात चक्रन्द च कराभ्यां ललाटमाहत्य विकीर्णकेशः। पश्चाद् देवमन्दिरं प्रविश्य विग्रह-पदतले मूर्च्छापन्नः स्थितः सुचिरम्। पुत्रवत्सला गौतमी रोदनेन नेत्रारविन्दे हिमग्लानिं प्रापयत्। करुणकण्ठेन सा विललाप धीरतामूर्तिरपि विह्वलचित्ता।—

हा सिद्धार्थ प्रथमतनय स्नेहरश्मे प्रमूर्त !
किं क्रन्दस्यां करुणलपनं न श्रुतं ते जनन्याः ?
उन्मादोऽहो शमधनपिता विह्वला धर्मपत्नी
निर्वाक् पुत्रो प्रकृतिनिवहो हन्त मग्नोऽश्रुसिन्धौ ॥ १५८

पश्चात् महाराजेन दिशि दिशि प्रेरिताः सुतान्वेषणाय चराः। अहं चाविचरं देशाद्देशान्तरम् अविरतम्। तथापि न प्राप्ता वार्ता प्रव्रजितस्य प्रभो र्मे। आ मृत्योरहं युवराजम् अन्वेषिष्यामि।—

आयुष्मान्मे भ्रमति भुवनं जीवातिहतये
लब्धुं रत्नं निखिलजगतो निर्वाणकरणम्।
चित्ते तस्य स्फुटति कुसुमं मन्दारकिरणं
भृत्यः काङ्क्षे किमपि तदहं नंनम्यितुमये ॥१५९

(ततः प्रविशति काश्यपः)

छन्दकः।—नमस्ते विप्रवर ! कुत आगतो भवान् ?

काश्यपः।—अभिवादयते भवन्तं शाक्यमुनेः शिष्य काश्यपः।

छन्दकः।—को नाम शाक्यमुनि र्भवतो गुरुः ?



काश्यपः ।—शाक्यमुनिः सुविदितो महर्षी राजगृहे । शाक्यवंशोद्भूत 'स्तत्र-भवान् अतः कथ्यते शाक्यमुनिः ।

छन्दकः ।—कियद् वयस्तस्य मुनेः ? अपि स तरुणवयाः ?

काश्यपः ।—अथ किम् । पञ्चत्रिंशद्वर्षदेशीय एव सः । षड्भि वंर्षैस्तेन सिद्धिराप्ता तपसः ।—

बालेन्दुः शीर्णश्रृङ्गो रजनितिमिरं छिन्ते हि निमिषं
भिद्यन्ते हस्तिकुम्भाः किमिव तरुणैः सिंहैश्च तरसा ।
वृक्षाः प्रद्योतयन्ते नवविकसितैः पुष्पैः खलु दिशं
कुत्र प्रैति प्रभुत्वं गुणकृपणता स्वल्पेन वयसा ।।१६०

छन्दकः । (सौत्सुक्यम्)—स एव भवति मम प्रभुः शुद्धोदनसुतः सिद्धार्थः । अधमोऽयम् आसीत्तस्य, सारथिश्छन्दकनामा यस्मिन् सोऽस्निह्यत् प्रियसख इव ।

काश्यपः ।—शाक्यमुनि स्तर्हि राजपुत्र एव ! न प्रकाशयति निजपरिचयं मूपसम्बन्धिनं कुत्रापि । तथापि तस्य विशालं बक्षः समुन्नतस्कन्धः शालप्रांशु वपु स्तथा भास्वरं ललाटं वदनाम्बुजसौकुमार्यं च सूचयन्ति आजन्मनेतृत्वमेव तस्य महात्मनः ।

कुत्राकाशे स्याज्जलदपटलै रावृत स्तीक्ष्णरश्मि-
र्वाप्यां वा गुप्तं क्व भवति तथा शैवलैः पुण्डरीकम् ।
भस्मैरालुप्तो न खलु मलिनैः प्रोज्ज्वलो यज्ञवह्निः
किंस्वित् कौषेयै र्मुनितनुवृतं छाद्यते राजचिह्नम् ।।१६१

पञ्च शिष्यांश्च प्रियबन्धूनिव पश्यति सः ।



छन्दकः ।—किमत्र चित्रं, भाव ?

चन्द्रमा जलदमित्र-मम्बरे
धार्मिको भुवि सखीयति प्लवम् ।
छन्दक स्तव गुरोः पदाश्रित
उत्तमश्चलति चाघमैः समम् ।।१६२

परन्तु भवादृशा जनाः स्वयमैव पुण्यव्रताः ।

काश्यपः ।—मगधाधिपति बिम्बसारोऽपि शाक्यमुने र्गुणमुग्धो भक्तो जातः । एकदा राजगृहतपोवनं गत्वा तस्माद् धर्मोपदेशं श्रुतवान् नृपतिः । महर्षिं च स्वभवनं नेतुं कामयामास तथापि तस्य निर्बन्धातिशय्यं प्रशंसयन्नपि निमन्त्रणं न जग्राह शाक्यमुनिः । उक्तं च तेन—

मूर्तं बिम्बं पुण्यरते स्त्वं नृपवर्य !
सम्प्रीतोऽस्मि स्नेहवचोभि स्तव चाहम् ।
शक्तो नायं साम्प्रतमामन्त्रणलिप्सु-
र्गन्तुं सद्म प्रेष्ठमपि प्राप्य न कामम् ।। १६३

तदनन्तरं महतैव दुःखेन भूपति र्बिम्बसार स्तपोवनात् प्रतस्थे । सस्मितं तु सोऽब्रवीद्—यास्यामि पुनरागमनाय तवाश्रमे हि नित्याश्रयप्रार्थीति ।

छन्दकः ।—पुण्यश्लोको नरपतिरेव राजर्षिर्बिम्बसारः अतः स गुणं जानाति पुण्यात्मनः प्रभो र्मे ।—

वेवेक्ति विद्वान् विदुषां चरित्रं
ज्ञातो मनस्वी महतैव नान्यैः ।
सिद्धार्थशिष्यो यदि बिम्बसारो
योगोऽत्र सत्यं मणिकाञ्चनाख्यः ।। १६४



काश्यपः ।—तथ्यमुक्तं भवता मधुरवचसा । पुनरपि साधनां श्रयते शाक्यमुनि-निर्जनवटवृक्षमूले । गन्तुकामोऽस्मि सत्वरं यदि भवते रोचते ।

छन्दकः ।—न सिद्धार्थसेवाया विघ्नकारणं भवति भृत्यश्छन्दकस्तत्पद-रेणुकाङ्क्षी । अहमपि व्याकुल स्तद्दर्शनाय । अतो भवान् यद्यनुमतिं यच्छति मे तर्हि अहमपि गच्छामि तव पदाङ्कमनुसृत्य ।

काश्यपः ।—सानन्दं नेष्यामि भवन्तं तत्रैवाधुना । आगच्छतु इतः ।—

सुचेतःप्रसङ्गः सुधास्यन्दनः स्या-
दृषीणां सपर्या विधत्ते नृ-नन्दम् ।
तथाध्वप्रचारः सता सत्यवाचा
क्व कर्णामृतं न प्रवर्षेन्मनोज्ञम् ॥ १६५

( निष्क्रान्तौ )

—इति विष्कम्भकः—



( ततः प्रविशति वटवृक्षतले उपविष्टः सिद्धार्थः )

सिद्धार्थः ।—कामं मध्यमः पन्थाः श्रेष्ठस्त्रिमार्गेषु इति विज्ञातं मया तथापि न सम्बुद्धिर्लब्धा ऐकान्तिकदुःखनिर्वाणविधायिका । दुःखत्रयज्वाला-निर्वाणं हि प्रकाम्यं नराणाम् । आर्यर्षिभि र्यत् कैवल्यं कथ्यते किमु तत् किमुत मोक्षो मुक्ति र्वा सम्भवति आत्मनः ? किमात्मा देहपिञ्जरे पक्षिवद् बन्दीकृता जीवप्राणा आहोस्वित् क्षणिकपञ्च-



स्कन्धवद् विनाशात्मकः ? पञ्चस्कन्धानां सन्तानमिव प्रतिभाति तु आत्मा तत् कथं स मोक्षं लभते चिरस्थायिनम् ?—

पञ्च स्कन्धा आत्मनो रूपसंज्ञे
संस्कारश्चातः परं वेदनाख्यः ।
विज्ञानं स्यात् पञ्चमः पञ्चकृत्वः
संघातो यो भङ्गुरैरेव सृष्टः ॥ १६६

अपि चात्मनि न चिरस्थायिनि भवति मोक्षः कल्पते विनाशायैव । किमीदृशी नाशात्मिका निर्वाणप्रशान्ति र्जीवभाग्यं जगति ? अपि कर्म नाम नैरात्म्यं प्रभवति निर्वाणलाभाय ? कथं वा अस्तित्व-गुणस्य दुःखस्य ध्वंसः सम्पद्यते ? नासतः सज्जायत इत्येव आप्तवाक्यं न्यायसम्मतं प्रतिभाति किम् ? यद्येव तत् सत्यं तत् सतो जायत असत् किमिति ? नूनं सत्तास्वरूपं तत्त्वं निहितं गुहायां दुष्प्रवेश्यायाम् !—

अत्रास्ति द्वारं यत्र मे पार्ष्ण्योः सभीतिकुण्ठनं
बध्नाति क्षीणे चक्षुषी कृष्णं निगुढगुण्ठनम् ।
रात्रौ तामस्यामंशुमान् वा क्व भाति चन्द्रमा
नान्तर्दृष्टि र्मे तत्त्वबोधेश्चेत् करोमि लुण्ठनम् ॥ १६७

तत् पुनरपि गभीरं निदिध्यासनं करोमि । स्वस्थमधुना शरीरं मम मनश्च प्रसन्नम् । आहारविहारैः कालं यापयितुं न शक्नोमि सुप्तिं च विस्मरामि साम्प्रतम् ।—

छायाश्रीपादपाधो वनकुसुमचिते शष्पभागे निषण्णः
क्लान्तिक्लेशाच्च मुक्तो मलयजमरुता ध्यानमग्नो भवेयम् ।
बोधावुत्तिष्ठ ईशो निखिलशुभकृते संहितात्मप्रचिन्तो
नैष्टा मर्तुं तथापि स्वतनुमपि कथं नेष्टये पातयेयम् ॥ १६८

( ध्याननिमग्नस्तिष्ठति )



( ततः प्रविशतः काश्यपश्छन्दकश्च )

छन्दकः । ( साश्रुलोचनम् )—षड् वर्षाण्यतीतानि मे प्रभुविरहितस्य । क्षीणदेहो जातो युवराजस्तथापि ज्वलदर्चिवह्निवद् देदीप्यते दिव्य-ज्ञानरश्मिना । ध्यानरतस्य तस्य शरीरं निष्पन्दं वायुहीने प्रकोष्ठे निष्कम्पः प्रदीप इव ।—

तुभ्यं नमामि प्रभो शाक्यचन्द्र
स्नेहेन धन्यः सदा छन्दकस्ते ।
प्राप्णोषि सिद्धिं व्रतस्यात्मनस्त्वं
क्व स्यान्नु मोघो मनीषिप्रयत्नः ।। १६९

काश्यपः ।—न कर्तुमिच्छामि गुरुदेवस्य तपस्याविघ्नं स्वयमेव ।

छन्दकः । ( सस्मितम् )—नन्दी यथा महायोगिनं महेश्वरं तथा त्वमपि रक्षसि योगिवरं शाक्यमुनिं तपोभङ्गकारणात् काश्यप भदन्त !

काश्यपः ।--दीनो भक्तोऽहं तत्रभवता नन्दिना न तुलनीयः । नात्रागतश्च अकालवसन्तः स्मरसखः । को वा शक्यते तपोविघ्नं जनयितुं महर्षेरस्य ? तथापि स्थानत्यागं साम्प्रतं मन्ये आर्य छन्दक !

छन्दकः ।—राजगृहनगरस्य शोभां द्रष्टुकामोऽहं भवता सार्धं गच्छामि सद्यः ।

काश्यपः ।—प्रथमः कल्पः ! एहि भाव ।

(निष्क्रान्तौ)

(आकाशे करुणस्वरेण सवाद्यं गीतम्)

कामयसे नरसुत चिरसुखकारणं
धारयसे करमुत नियतिजवारणम् ।
निजमनो मानयसे
स्वयमहो मारवशे
मूढमते कुरु नुत-सुरपदधारणम् ।।१७०



सिद्धार्थः ।—(ध्यानमग्नम्)—

"यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा ।
नाप्येकैव विधान्यथा परकृतेनापि क्रियादि र्भवेद्
द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति ।"

(पुनरपि नभसि)

अञ्जसा गच्छ माराख्य मन्मथ विश्वरञ्जन ।
पाल्यतां शक्रनिर्देशो मायातनयगञ्जनः ॥१७१

प्रवलपराक्रान्तो ध्यानिवीर एव शाक्यसिंहः । तस्य तनुमाश्रयस्व सर्वदमन मदन !

पुष्पधन्वन् त्यज भस्मशय्यां परिभाव-रिष्टाम् ।
रुद्रवह्ने हिं लभस्व सज्जां ज्वलदर्चि-निष्ठाम् ॥
मृत्युमाप्नोतु यत्ते सत्त्वे नश्वरं
जागृहि ध्यानरूपं धृत्वा भास्वरम् ।
धूर्जटे र्भालनेत्रात् प्राप्तो लयः
सूक्ष्मसत्तामृतं तस्मिन् सञ्चारय ।
शीघ्रमुत्तिष्ठ विहाय लज्जां शमन-प्रतिष्ठाम् ।
जिष्णुतन्वामतनो वृणुष्व स्वतनुं वरिष्ठाम् ॥१७२

सिद्धार्थः । (ध्यानमग्नम्)—

सर्वद्रव्यं भवति हि भुवने कारणोद्भूतकार्यं
सत्तासत्त्वं द्वितयमपि मृषा वर्ण्यते तत्स्वरूपम् ।
कालक्षौद्रं रचयति निखिलं वस्तुपुञ्जं मुहूर्तं
पञ्चस्कन्धैः क्षणिकपरिमितै रात्मसन्तानजातम् १७३



(पुनरपि गगने)—

रतिपते मन्मथ ! प्रेरय ते वसन्तसेनां रमणीरचिताम् !—

किं कुरङ्गनयना रंहथ कटाक्षतूर्णं
नृत्तचारचरणा रञ्जयथ चित्तघूर्णम् ।
कुङ्कुमाक्तनिचुला-न्निक्षिपथ रक्तचूर्णं
बन्दिनं कुरुथ तं मन्मथजयं सुपूर्णम् ॥१७४

सिद्धार्थः ।—(ध्यानमग्नम्)—

मिथ्या प्रेम व्यथितजगतः कामनावह्निभस्मं
मिथ्या मोहो विषयजरतः स्वप्नजालप्रहर्षः ।
देवा मिथ्या त्रिदिवमपि नः कल्पनासृष्टलोको
मुक्तिः कुत्र क्षणिकलषिणः कर्म बध्नाति विश्वम् ॥१७५

(ततः प्रविशन्ति तिस्रो वराङ्गनाः)

पञ्चदशी ।—(सस्मितम्)—

पङ्कजं किं ममास्यं न त्वं गणयस्यमर्त्यं
कुड्मले वा कदम्बे कम्पारुणिते उरोजे ।
हस्तयोः किंशुकानि प्रोत्फुल्लपदोः पलाशे
पूर्णिमायां वृणीते त्वां पुष्पितपञ्चदशी ॥१७६

सप्तदशी ।—(विहस्य)—वनमालिके बालिके । अनाघ्रातयौवना खलु त्वं मञ्जरिता लतेव यद्यपि । न त्वां सम्भाषते यौवनमदमत्त-मातङ्गसदृशः पुरुषवर्यः । मयैव जेतव्यो जितेन्द्रियस्तापसः । (सिद्धार्थं प्रति सभ्रूभङ्गम्)—



अपाङ्गयो र्मे रात्रिन्दिवं नृत्यति विद्युल्लतिका
मदोर्मिकान्ति श्चङ्क्रमप्यते वक्षसि काङ्क्षारभसैः ।
उदग्रलीला लास्योद्गमा मादयते पञ्चशरं
कथं न कान्तो मायात्मजः सप्तदशीं कामयते ।।१७७

(जनान्तिकम्)—सखि अष्टादशि ! सन्ततिधारणात् पृथुदेहा सञ्जाता त्वं स्तोकेन । कथं विमोहयसि सिद्धार्थं स्थिरयौवनम् ?

अष्टादशी । (विहस्य)—रमणीसौन्दर्यस्य परा काष्ठा लभ्या सन्तानपोषणात् पश्चादेव । अपि च, न ह्येष युवराज स्तरुणोऽजातश्मश्रुः । रसिक एव विजानाति घनायितरसास्वादम् अपूर्वं यथा समुद्रमन्थनजातामृतस्य । (अङ्गुल्या निजतनुं निर्दिश्य)—

अष्टादशीयं ज्ञेया नारीविषये कर्तुराद्या सृष्टिः
सन्तानसूते जाता तस्य प्रतिमा वर्धितश्री र्वल्ली ।
स्थास्नु स्तडिद्वा पीनाङ्गाभ्रावरणे काञ्चिकार्तिस्पन्दा
शम्भु र्विमुग्धो दृष्ट्वा मां मेखलिनो मूर्छनीं मर्त्यस्य ।।१७८

पञ्चदशी ।—हला प्रियसखि अष्टादशि ! किं न वेत्सि त्वं मुनिजनो भवति शिशुसमोऽतिग्ममना इति ? अत स्तस्मै रोचते यथा मद्विधा स्फुटनोन्मुखी तरुणी न तथा मदविदग्धा वरवर्णिन्यपि ।

सप्तदशी । (विहस्य)—ऋते मादृश्याः काऽन्या कन्या विमोहयति मध्यपथानुसारिणम् अनतिक्रान्तयौवनम् ?—

त्यजति सपदि सौम्यः सप्तपद्यां यथाऽज्ञां
मदनमुकुरगात्रां विप्रलम्भे तथाऽन्याम् ।
बहु गणयति मन्ये मद्विधां मध्यमार्गां
नवरसरुचिमेव प्रेमतीर्थं वनान्याम् ।।१७९



अष्टादशी ।—मूढे प्रियसखि ! न खलु काम्यतामिह परिणयः कदापि । विप्रलब्धा नाद्यापि सञ्जाता मदनचतुरेयम् ।

अष्टादशी ।—अनभिज्ञा यथा पञ्चदशी कम्पते प्रत्याख्यानशङ्कया तथा त्वं च तनुश्रीरपि छलापटुः सप्तदशी । अथवा वितण्डायाः किं प्रयोजनम् ? मारप्रभुणा प्रेषिता वयम् अतः सर्वा मिलित्वैव नियोगसम्पादनाय प्रयतामहे । तद् गीयतां मुनिमनोविमोहनं सङ्गीतम् ।

अन्ये । (सस्मितम्) इदानीं कथयसि त्वं भूतार्थम् । परस्परविवादेन कालक्षेपो न करणीयः ।

अष्टादशी ।—

एकैकशश्चलिष्यामः स्वप्रेममृगयासु नः ।
मन्मथविजयार्थं तु समरे मिलिताक्रमः ॥१८०

अन्ये ।—वाढं वाढम् ! विलम्बितेनालम् ।

—(सङ्गीतं सनृत्यम्)—

पञ्चदशी । गुञ्जति यथा भ्रमरी तथैव गुञ्जाम्यहम् ।
सप्तदशी । नृत्यति यथा कुररी तथैव नृत्याम्यहम् ।
अष्टादशी । रंहति यथा शवरी तथैव रंहाम्यहम् ॥
निक्षिपामि भ्रुधनुषो विशिखं सम्मोहनम् ।
सर्वाः । (युगपत्) पुष्पचापेन पुरुषः विषमं कुर्याद् रणम् ।
कल्पयामस्तु बहुशो विजयं नो दुःसहम् ॥१८१

अष्टादशी ।—नूपुरनिक्वणेन मिलितकण्ठस्वरेण च मुखरितमरण्यम् । अधुनाऽपि प्रतिध्वनिरेव दिङ्मण्डलं प्रकम्पयति लीलारभसेन । तथापि न शृणोति न पश्यति किञ्चिदपि ध्यानलीनस्तपस्वी । किं विफलतां यास्यति नः प्रयत्नः ? (सिद्धार्थं प्रति)—



आताम्रे पक्ष्मणी त्वं प्रोन्मील्य सद्यः सुपर्णे
पश्यात्र प्रेमिकास्ते दिव्याङ्गना रूपमुग्धाः ।
सङ्गीते देहि कर्णं शिञ्जास्वनेन प्रबुद्धो
ज्योत्स्नोच्छ्वासैः करोतु श्रान्तेः शमं चन्द्रलेखा ॥१८२

सप्तदशी । (सहास्यम्)—न शृणोति मधुराणि ते वचांसि रसविरागः सुषुप्तस्तापसः । वृथैव यतसे तन्मोदनाय मानिनि !

चक्रन्दसे कानने चित्रसारङ्गि
मातङ्गकल्पं कथं मोहयेरत्र ।
कान्तः समाधिश्रितो भिन्नलोके हि
वाक्यं न गीतं श्रुतं तेन ते हन्त ॥१८३

अष्टादशी । (सकोपम्)—मायाजालं विस्तार्य बद्धुं शक्ये दुर्दान्तद्विरदमपि का कथा सुप्तमृगस्य ? यद्यपि करभरूपेणैव मातृजठरं प्राविशत् स तथापि नित्याश्रुप्लुतलोचनः खलु हरिणायत एषः ।—

अघटनघटनपटीयसी जगति मायाशक्ति-
र्भवति किमपि नरमोहिनी यदि रहः प्रक्षिप्ता ।
हृदयविलसितशरैरहं नयनयो र्ज्यासूत्रा-
न्मम चरणशरणबन्दितां ननु नयामि प्रेष्यम् ॥ १८४

पञ्चदशी । (सहास्यम्)—मोघीकृतोऽनेन जितेन्द्रियेण पुरुषेण मायामन्त्रस्तव । मायाजयी प्रतिपन्नो मायानन्दनः सिद्धार्थः ।—

उपहसितमिव खलु सखि तव वचनं
कथमनुभवसि हृदि परिकररचनम् ।
न गणयसि तु जगति जितरणमदनं
वियति हि कलयसि छलसुखसदनम् ॥ १८५



अष्टादशी । (सदर्पम्)---करोम्यधुना स्वयमद्वैतनृत्तं विश्वविमोहनम् ।

(नृत्यन्यी गायति)---

पद्मिनीमिव प्रत्युषसि निरन्तरमञ्जरितां
पुष्कलश्रिया नद्युरसि निरङ्कुशसञ्चलिताम्
उर्वशीलास्यां मन्यसे मां सुकन्यां
पूर्वरागास्यां चित्तचारीमनन्यां
विश्वयौवनान्तर्नभसि मधुव्रतगुञ्जरिताम् ।
कांक्षसे यदा मां मनसि युवन् सुरवृन्दवृतां
वन्दसे तदा हृत्सरसि पदाम्बुजभक्तिधृताम् ।
लप्स्यसे शुक्तिं नर्मवेलोर्मिजन्यां
प्राप्णुया मुक्तिं शर्मसिन्धोर्हि धन्यां
बन्धनातुर त्वं पिवसि सुधां चिरदुःखहृताम् ॥ १८६

(सिद्धार्थं निकषा गच्छति हस्तौ प्रसार्य)

ब्रूहि मे मर्मवाणीं तव, हृदयवाञ्छित ! —

मर्मसूक्तं प्रियायै यच्छ श्रुतिरञ्जनं ते
दुःखशान्ते हि वक्ष्ये वार्तां तव सर्वमर्त्यान् ।
विश्ववाञ्छास्वरूपा प्रज्ञाशमिमद्य वल्ली
संश्रयन्ती प्रसूते मुक्तेः सुमनः-प्रबन्धान् ॥ १८७

सिद्धार्थः । (ध्यानमग्नम्)—

आत्मा न सुचिरसत्तो भाववीथिं हि संचारिणी
संसारकुटिलचक्रे कर्महेतो नृणां घूर्णनम् ।
कर्मैव भवति सेतुर्जन्म जन्मान्तरं चान्तरा
तृष्णा जनयति कर्म क्षेमलिप्सोरतो बन्धनम् ॥ १८८

अष्टादशी । (कराभ्यां स्वशिरो निपीड्य)—हा हताऽस्मि दैवविमर्दिता !



सप्तदशी ।—सिद्धार्थ ! ज्ञानचक्षुरुन्मील्य पश्य मद्रूपं त्रिभुवनदुर्लभम् ।—

क्व यशोधारा पत्नी ते पतिभक्तिमात्रसम्बला
क्व तथा शुद्धान्ते सख्य श्चटुलान्तरा निरन्तरम् ।
क्व तु तन्वङ्गी मादृक्षी सुरसूनुचित्तशृङ्खला
रमणी मंत्या यां दृष्ट्वा किल मंकटायते परम् ।। १८९

सिद्धार्थः । (ध्यानमग्नम् )—

अङ्गशैत्यं वार्धकं व्याधितापो मृत्युः प्राणविघातक-
स्त्रीणि यान्ति द्विष्टतां देहिनां नो मर्मच्छेदकतां ध्रुवाम् ।
लीनवाञ्छः कर्महा मुक्तजीवः कामाज्जन्म पुनर्जन्म
धिङ् मनुष्यं कामनाकीटदष्टं धिङ् नारीञ्च मदालसाम् ।। १९०

सप्तदशी ।—(निःश्वस्य) हा मे दुर्भाग्यम् ! मारस्य प्रियदूत्यहं पराजिता नरहस्तेन ।

पञ्चदशी ।—(रुदित्वा) भृशं कुप्यति मे शक्रबन्धु र्व्यर्थं यतो मायाजालम् । महामुने ! कुरु कृपां शरणागतायाम् । शृणुष्व मम वचनं तथ्य-पूर्णम् ।—

रोचनैव निशि बालशशिकला
पुंश्चकोरमभिनन्दयति भृशम् ।
काङ्तीह नवचन्दिरमबला
कान्त देहि कृपया सफलदृशम् ।।१९१

सिद्धार्थः ।—(ध्यानमग्नम्)—

खलकालसर्प इह केलिसंमदो
मनुजं विवष्टि मणिभोगरश्मिना ।
सहसा करोति विषमान्तदंशनं
रतये नु हन्त शमनस्य कामिनः ।।१९२



पञ्चदशी ।—धिङ मे जीवनं यौवनं विप्रकृतायाः !

(निष्क्रान्ता)

अष्टादशी ।—एहि सप्तदशि ! आवाञ्च गच्छावो विफलप्रयत्ने । न निन्दामि त्वात्मानं योगिवरं वा ।—

नमः कामकृतान्ताय नमस्ते पुरुषर्षभ ।
लभस्व साधनासिद्धिं विश्वनिर्वाणदायिकाम् ॥१९३

(निष्क्रान्ते)

(पुनरपि आकाशे)

मोघीकृतं विलासिनीवृत्तं तपोभङ्गहेतवे । प्रेषयाम्यधुना तत्पत्नी-छद्मना मायाकन्यां दुर्वारणीयाम् । गच्छ कीर्तिकुण्डले सिद्धार्थं-च्छलनार्थम् ।—

यशोधारा नारीणां ललामानवद्या
पतेः सा मूर्तप्रेमा मता धर्मपत्नी ।
न शक्नोति क्षुब्धां तां वशी विप्रकर्तुं
क्व शीतांशू राकायां त्यजेद्रोहिणीं वा ॥१९४

(ततः प्रविशति मायाकन्या यशोधारारूपा)

कीर्तिकुण्डला ।—(सक्रन्दम्) हा नाथ ! किं विस्मरसि प्रियां ते यशोमतीम् ? सुचिरेण प्रोषितभर्तृकाऽहं सोढुं न क्षमा तव वियोगव्यथाम् । पुत्रो राहुलश्च राहुग्रस्तश्चन्द्र इव विषादतमिस्रापन्नो नितराम् । न शृणोषि मद्वचनं करुणं कान्त ? कार्श्यं गता तनुस्ते तपःक्लेश-



प्रचयेन। आर्यपुत्र, गृहं प्रत्यावर्तस्व पितु र्मातुश्च हृदयनन्दनाय। (क्षणं ध्यात्वा स्वगतम्)——न विश्वसितीव मयि छद्मवेषायाम्। तदिदं भाषे सूचयितुमभिज्ञानम् (प्रकाशम्)——

यामिन्यां पौर्णमास्यां सुनिभृतमलिन्दे पुष्पकलितां
पर्यङ्के छद्मसुप्तां चरणपतितो मां हृष्टमवदः।
कीर्तिं भक्ताय देहि त्वमतुलयशोदे मर्मलसितां
स्वर्गान्मन्ये हि लक्ष्मीः प्रकटितनिजश्रीः साम्प्रतमधः ।।१९५

(स्वगतम्)——तथापि तूष्णीमास्ते महात्मा मायावरसुतः। किं कर्तव्यं मया? तद्देहस्पर्शनपापाद् विभेमि सुतराम्।

सिद्धार्थः।—(ध्यानमग्नम्)—

मन्त्रमुग्धनागवन्नु किं नरा व्यलीकहेतो-
र्विस्मरन्ति मुक्तिवर्त्म मोदनाय मर्त्यभूमौ।
आत्मनोऽस्ति रत्नदीप इष्टमार्गदर्शनार्थं
नात्र भाग्यविडम्बितैस्तु गृह्यते स कामदिग्धैः ।।१९६

कीर्तिकुण्डला।——विजयकीर्ति रस्तमिता ममाद्य प्रभृति। यास्यामि यावद् भट्टारकं विहाय मारनिवेदनार्थं लाञ्छनालाभाय च।

(निष्क्रान्ता निचोलं निवेद्य सिद्धार्थपादमूले)

(भूयश्च वियति)

पराजिता खलु कीर्तिकुण्डलाऽप्यपराजेया। प्रेरयाम्यतो वरेण्यां गीतिमन्द्राख्याम् अप्सरोजां मायाकन्याम्।

गीतिमन्द्रे जयोच्छ्रिते गच्छाञ्जसा तपोवनम्।
मायानाये हि बद्धुं तं सिद्धार्थं स्वार्थसिद्धये ।।१९७



(ततः प्रविशति रोरुद्यमाना गीतिमन्द्रा गौतमीछद्मना)

गीतिमन्द्रा ।—(स्वगतम्) गौतमीरूपाऽहं जाता मायानन्दिनी । विमोहयामि स्नेहच्छलेन कृतकतनयम् । (प्रकाशम्) वत्स सिद्धार्थ ! पश्य ते मातुरपि प्रियतरां मातृष्वसारं गौतमीम् । पुत्र, त्वद्विरहेण मृतप्राया वयं विशेषतः स्वयमहं रात्रिन्दिवं रोरुद्यमानाऽवरोधे । शुद्धसत्त्व, शृणु मे वचनं स्नेहविगलितम् । स्वतनयं नन्दमपि न सिंहासनारूढं द्रष्टुं शक्ये । राजचक्रवर्ती जनकस्ते मृत्युं प्रतीक्षते प्रतिक्षणम् । राजमुकुटं तव शिरसि संस्थाप्य गङ्गातीरं गन्तुकामः सः । राहुलो बालक एव शक्तिहीन स्तथा कूटवर्जितः । देवदत्त स्तं हन्तुं प्रयतते ताडयितुं च राजधान्याः । को रक्षति तव राज्यं पैतृकं पुत्रं च स्नेहपुत्तलम् ? विलम्बेन कार्यहानिः स्यात् । जागृहि सत्वरम् । न जाने किं करोत्यस्मिन् मुहूर्त एव निष्करुणः पाषण्डो देवदत्तः ।—(क्षणं समीक्ष्य)—कथं वधिरायसे सुपुत्र ? (गायति)—

क्रन्दति यशोधारा स्त्री ते नृपनन्दिनी
रोदिति राहुलो नित्यम् ।
क्रन्दति महाराजो माता गृहबन्दिनी
त्वं खलु पुत्र मे वित्तम् ।।
मा जात गौतम शोकानले मम दह दीनचित्तम् ।।
कुत्र युवराजो नः पृच्छन्ति च बन्धवः
स्निह्यति यः प्रजापुञ्जे ।
कुत्र विगतोऽकाले पक्षी स मधुश्रवो
रौति न नो मनःकुंजे ।।
मा जात गौतम शोकानले मम दह दीनचित्तम् ।।१९८

सिद्धार्थः ।—(ध्यानमग्नम्)—

बाष्पाम्भसा विरच्यन्ते नराणां सप्तसिन्धवः ।
मुहूर्तेन तु शुष्यन्ति सन्मार्गसूर्यरश्मिना ।।१९९



गोतिमन्द्रा ।—हा मन्दभाग्यम् ! सुखोद्यानं परित्यज्य परिरमयसि विषाद-दवाग्नौ । को रक्षति त्वां मारस्य प्रदीप्तमुखात्, नरखद्योत ? गच्छाम्यहं पुनः मारसंवर्धनाय ।—

(निष्क्रान्ता)

(पुनरपि नभसि)

यथैव विफलं लास्यं प्रीतिश्च विफला तथा ।
यास्यति फलतामद्य दुःसहं मारपीडनम् ॥२००

(साट्टहासम्)

झंझावात्या स्तीव्रक्रोधा धावन्त्वद्य प्राणघ्ना
धारोच्छ्वासं पृथ्वीप्लावं वर्षन्त्वम्भोदा जोषम् ।
विद्युल्लेखा जङ्गम्यन्तां चामुण्डालीलामग्नाः
पापत्यन्तां वज्राः कृत्वा प्रध्वंसायाते घोषम् ॥२०१

(सर्वतो विद्युतः प्रद्योतन्ते वज्रा निनदन्ति वृष्टिपातश्च मुषलधारया)

(ततः प्रविशतः काशपश्छन्दकश्च)

छन्दक ।—कष्टं भो ! विषमं दुर्घटनम् आपतितमत्र । अधुनापि न तपोभङ्गो जातः प्रभोः परन्तु तिष्ठति स पद्मासनस्थ ऋजुदेहोऽन्तश्चक्षुः स्तोकस्मिताननः ।

काश्यपः ।—आश्चर्यं सखे परमाश्चर्यम् !—

आस्यं चकास्ति स्फुरदभ्रदीप्त्या
क्षिप्तेन्द्रशस्त्रं स्पृशति क्व गात्रम् ।
सद्यो विमन्युः क्रियते स वृष्ट्या
किं दुर्विपाको महदर्घ्यमात्रम् ॥२०२



छन्दकः ।—तथापि तमुत्थाप्य गृहान्तर्नेतुं कामये, भदन्त ! तपः-क्षीणतनोरस्य व्याधिशङ्का मां भृशं बाधते ।—

आ जन्मनो वर्धितः स्नेहवर्षेण
भूपात्मजः सौम्य सर्वार्थसिद्धो हि ।
प्रेक्ष्यात्र तं हन्त हस्तावपावार्य
शक्ये कथं गन्तुमन्यत्र वृद्धोऽपि ।।२०३

काश्यपः ।—मा भैषीश्छन्दक प्रियवयस्य ! न कोऽपि शक्नोति गुरुदेवस्य मे केशाग्रमपि स्प्रष्टुम् ।

(पुनरपि विद्युदुद्भासो वज्रगर्जनञ्च)

काश्यपः ।—

प्रगर्जतामशनिदलं मुहुर्मुहुः
क्षणप्रभा नयनदहा विभातु वा ।
प्रभञ्जनो विलसतु रुद्रताण्डवे
न मद्गुरोश्चरणनखान्यपि स्पृशेत् ।।२०४

छन्दकः । (ऊर्ध्वमवलोक्य)—पश्य पश्य आर्यकाश्यप ! मेघपुञ्जान्तराले स्थितो लोलजिह्वो भीषणदन्तो विकटदर्शनो राक्षसः प्रलयविध्वंसं कर्तुमुद्यत इव लक्ष्यते । कः स महाशत्रुरस्माकम् ?

काश्यपः । (ऊर्ध्वं दृष्टिं निक्षिप्य)—शक्रदासो मार एष महारिपुर्नृशंसस्तपोभङ्गासमर्थो धावत्येव जम्बुकवत् ।—

घूर्णायताक्षं कृष्णाहिशीर्षं
शक्रायुधात्तं घोराट्टहास्यम् ।
वह्निं वमन्तं दुर्वारवीर्यं
पश्यामि मन्ये माराख्यदैत्यम् ।।२०५



छन्दकः । (ऊर्ध्वमालोक्य सकरतालम्)—दृष्टिं देहि बन्धो ! पलायते क्रोधेन स्वदन्तान् संघट्य शोणितमुद्गिरन् रक्तजवाचक्षु र्दानवव्यंसकः । जय शिव शम्भो ! सर्वार्थसिद्धस्य जय एव सूच्यतेऽत्र ।

काश्यपः । (अङ्गुलिं संस्थाप्यौष्ठाधरे)—तूष्णीं श्रूयताम् ! किञ्चिदपि वक्तुकामः स्यात् स्फुरिताधरो महर्षिः ।

सिद्धार्थः । (ध्यानमग्नमेव)—

श्रृण्वन्तु शोकसन्तप्ता बोधिलब्धस्य मे वचः ।
आर्यसत्यानि चत्वारि सन्ति निर्वाणलब्धये ।।
जीवनं दुःखसत्त्वं हि दुःखं पुनः सहेतुकम् ।
हेतौ नश्यति कार्यं च मार्गोऽस्ति द्वयनाशनः ।।२०६

काश्यपः । (सहर्षम्)—अमृततस्यन्दं वचनं भाषते बुद्धदेवो मानवस्यामृतत्व-लाभार्थं मर्त्य एव । महामन्त्रद्रष्टा महर्षिरेष सन्मार्गं प्रदर्शयति सर्वकल्याणहेतवे । जयताममिततेजा अमिताभो बुद्धदेवः !

छन्दकः ।—प्रभो मे दुरूहा साधना सिद्धिं प्राप्तवती देवकृपया । दिष्ट्या वर्धतां सिद्धार्थो विश्वार्तिनाशः !

सिद्धार्थः । ( उन्मील्य लोचने सप्रकम्पम् )—प्रियसख छन्दक ! कदाऽऽगत-स्त्वमत्र ? अपि कुशली त्वम् ? बन्धो काश्यप ! किं तपसि निर्विघ्नं प्रवर्धसे ?

छन्दकः । ( साश्रुनयनमपि सस्मितम् )—सर्वे कुशलिनो वयम् । तथापि किं नु स्यात् कुशलमस्माकं भवद्भिरहितानाम् ?

काश्यपः । ( प्रणम्य )—

अस्माकं क्व तपोविघ्न स्त्वयि तिष्ठति रक्षके ।
यस्माद्विघ्नाः पलायन्ते मारसमा विमर्दिताः ।। २०७

सिद्धार्थः । ( सविस्मयम् )—किं वदसि काश्यप ? न जानेऽहं मार-समाचारलेशमपि ।



छन्दकः । ( द्रुतम् )—आपतिता महाविपत्तिरत्र परन्तु तव तपोबलादेव सर्वं निराकृतम् । अपि च, विगतायां विपदि किमु समालोचनम् ? तपःक्लिष्टस्य तव प्रयोजनं प्रथमं हि विश्रामेण भोज्यपानीयग्रहणेन च । पश्चादालोच्यतां सर्ववृत्तान्तो यथावसरम् । परमां तुष्टि-मापन्नश्छन्दको यत् तस्य प्रभुणा विश्वदुःख-निर्वाणस्य पन्था आविष्कृतस्तपसा । सर्व एव सुखमवाप्नुवन्ति मानवाः ।

काश्यपः ।—द्यावापृथिव्यौ प्रोद्भात स्तथागतस्यामितार्चिषा बोधिद्रुमतलात् ।—

धत्ते शोभां काननं दिव्यरूपां
दिव्यज्योति र्यत्यतः सर्वदिक्षु ।
विश्वे जीवाः प्राप्णुवन्ति प्रहर्षं
निर्वाणाप्ते मोदते बुद्धदेवः ।। २०८

सिद्धार्थः । ( हस्तमुत्थाप्य सस्मितम् )—स्वस्ति काश्यपाय छन्दकाय च तथा सर्वजीवेभ्यः । ( आसनादुत्थाय )—आयातं सखायौ ! गच्छामो नगरोद्देशम् ।—

मधुरं वहन्ति पवना हिमाञ्चिताः
सुमनांसि भान्ति मधुरं वनाञ्चले ।
मधुरं च दिक्षु कुहरन्ति पक्षिणः
प्रदिशन्ति वर्त्म मधुचन्द्ररश्मयः ।। २०९

काश्यपः ।—यदाज्ञापयति गुरुदेवः । शिवा नः सन्तु पन्थानः !

छन्दकः ।—शनैः शनैरायुष्मन् ! शनैरार्यकाश्यप !—

प्राप्तश्चिरेण प्रभुपादसङ्गः
शान्तं नितान्तं विरहार्तचित्तम् ।
धन्या च तस्मिन् विहिता सपर्या
येनाद्य लब्धं नृमनो-विशल्यम् ।। २१०



सिद्धार्थः । (छन्दकस्य स्कन्धे हस्तं निधाय, सस्मितम्) --सर्वं एव वयं प्रहृष्टा-श्छन्दक । एहि मया सार्धम् ।—

वचांसि मे जगति किरामि साम्प्रतं
विनश्यति प्रमितिकरैर्मनस्तमः ।
भवेत्ततः सुकृतिरतिः सदात्मनो
वरिष्यते प्रचितसुखं महाव्रतम् ॥२११

(निष्क्रान्ताः सर्वे)

—इति षष्ठोऽङ्को बोधिप्राप्तिर्नाम—





# सप्तमोऽङ्कः

## —प्रवेशकः—

(ततः प्रविशति बालको नालको नैरञ्जनातीरे सारनाथ-तपोवनपथे)

नालकः ।—अहो ! आषाढसन्ध्यानभः किमपि सुन्दरम् ! दिगङ्गनासीमन्ताः सिन्दूरचर्चिता इव जाज्वल्यन्ते जवाकुसुमसङ्काशसूर्यरश्मिना च रञ्जिताः पुञ्जाम्बुदा श्चंक्रम्यमाणाः । आसन्नदिग्वधूविरहशङ्काया अंशुमाली भृशं विलम्बते दीर्घीकुर्वन् दिनबेलाम् । मृदङ्गवत् स्वनति अन्तर्व्यथाकम्पितम् अभ्रकरम्बकम् । सन्निहिते सारनाथस्थे शम्भुमन्दिरे ध्वनन्ति प्रकामं घण्टाशङ्खा मधुमन्द्राः । प्रचण्डगण्डवाद्यमपि शिवप्रीत्यर्थं जनयति सर्वेषां हर्षम् । स्वर्णकिरीटभूषितानि



खलु प्रांशुद्रुमशीर्षाणि येषां पल्लवमूर्धजा पुष्पमुकुलसमन्विताः। आश्रमोद्याने निर्भयं विचरन्ति कुरङ्गशावका जातशष्पभोजन-निस्पृहाः। संक्रीडन्ति निकुञ्जे रौद्रस्नाते हरिद्वर्णा विहङ्गपोताः। निभृतं च कूजन्ति पुंस्कोकिला अकालवसन्तसमागमभ्रमाः। केका-ध्वनिं षड्जसंवादिनीं विस्मरन्तीव नीलकण्ठा वर्षासन्ध्यायामपि। अगभीरे तटिनीपयसि ध्यानमग्नाः शुभ्रकेशवसना स्तपस्विन इव सुचिरम् एकपाददण्डायमानाः सारसाः। हंसमालाशोभितं सरिद्वक्षो गुञ्जरति वीचिमञ्जरितम्। मृदुपवनमर्मरमुखरं हि लसति लता-पल्लवपेलवम् उद्यानम्। चकितेन नभो विदीर्य सरणिशरेण प्रदीप्तेन बलाकाः प्रयान्ति मानसोत्कण्ठाः। नीडनिर्माणोत्सुका काचित् चटकसदृशी पक्षिणी सञ्चरति इतस्ततो गुल्मसमाकीर्णे वालुकारोधसि परन्तु न शक्नोति स्थानं निश्चेतुं चञ्चला। दारुमार्जारी क्रीडति सन्तानैः सह द्रुतनर्तनशीला वृक्षशिकडेषु कोटरेषु च।

(क्षणं तूष्णीं स्थित्वा)

अहो! बहूनि दिनानि मे व्यतीतानि मातृविरहदिवसात्। चित्त-व्याकुलोऽस्मि तस्याः पुनर्दर्शनाय। रम्यमिदं ऋषिपत्तनं महर्षि-देवलश्च भृशमस्निह्यन्मयि तन्मरणस्य पश्चाद् ऋषिः सुबलश्च। तथाप्याकर्षति मन्मनः श्यामलस्नेहबहुला पल्ली मेऽदृश्यमायान्तुना। अपि च सद्योबोधिप्राप्तं भगवन्तं बुद्धदेवं द्रष्टुं भृशं कामयामहे। मारजितो धर्मवीरस्य चरणवन्दना मम मर्मतृषां तर्पयिष्यति प्रभूतम्।

(ततः प्रविशति उपालिना सह अश्वजित्)

नालकः।—नमो युवाभ्यां भदन्तौ! कुत्र गच्छथः?

अश्वजित्।—स्वस्ति ते माणवक! गन्तुकामौ आवां सारनाथस्थं बौद्धचैत्यं भगवच्चरणदर्शनार्थम्। तत्रभवान् उपालिनामा अहं च अश्व-जिदाख्यः।



उपालि: ।—कुत्र ते निवास: प्रियवटो !

नालक: ।—महर्षे: सुबलस्य शिष्योऽयमधमो नालको निवसति वरुणातीर-तपोवने। जनकायते मयि स तपोधन: ।

अश्वजित् ।—क्षेममस्तु तव । अपि शक्नोषि सारनाथचैत्याभिमुखं पन्थानं निर्देष्टुम्, प्रियनालक ?

नालक: ।—अथ किं भदन्त ! पन्थानं जानाम्यहं लोकमुखात् परन्तु स्वयं न दृष्टवानद्यापि चैत्यम् । सुबलर्षि र्नेष्यति मां बुद्धसमीपं सत्वरमेव । (नेपथ्यमवलोक्य)—भवत स्तरणी दर्शनीया खलु कल्पमराली-रूपा ! मातुरवलोकनाय मनो मे नितरां विह्वलम् । मद्गृह-गमनार्थं नौकैव समाश्रणीया अतो व्याकुलता मे वर्धिता भवत्तरणी-दर्शनात् । (सगद्गदम्)—न जाने कदा यास्यामि गेहं चैत्यं वा !

अश्वजित् ।—समाश्वसिहि वत्स ! सिद्धिं लप्स्यते उदग्रवांछा तव बुद्धचरण-वन्दनस्य । तथापि प्रथमं गच्छ स्वभवनमेव । मातृपदं समर्च्य पुनरागच्छ शीघ्रमत्रैव ।—

संसारेऽस्मिन् सन्तपनबहुले मर्त्यानां नो
नित्यं तिष्ठेदात्मनिलयमहो रम्योद्यानम् ।
बालास्तस्मिन् सच्चरितलसिता: पुष्पायन्ते
चित्तोन्मादो दिव्यसुरभिरभि स्वर्गं कीर्णः ।।२१२

नालक: ।—सुमधुरं कृपाक्षरं वचनं भवत: । तथापि क्षम्यतां मे वाचाल-चापलम् । कथं भवान् स्वभवनं विहाय सन्न्यासमाश्रितवान् ?

अश्वजित् ।—(सस्मितम्) वत्स, युज्यते तव सरलप्रश्नो न चापल-प्रणोदित: । बाला एव स्वर्गदूता भवन्ति परन्तु गच्छति काले त एव परिणत-वयसो न तिष्ठन्ति कल्मषरहिता: । कामनास्वर्णकुरङ्गी प्रमादयन्ते सर्वान् अधर्मवर्त्मसु दु:खव्यालसङ्कुले महारण्ये निपातायैव । भगवान् बुद्धदेव एव सन्मार्गं निर्दिशति नितान्तवासनावर्जनाय चिरशान्ति-लाभाय च ।



नालकः ।—दानध्यानयज्ञै र्गच्छन्ति मानवाः स्वर्गलोकं परमानन्दनिकेतनम् ।

उपालिः ।—बालकस्त्वं न सम्यगवगच्छसि निगूढधर्मरहस्यम् । स्वधर्मवासश्च नानुचितः प्रायो नराणां पूतवृत्तानाम् । यदुपदिश्यते तव गुरुणा तदेवानुसर्तव्यं त्वया । वयं गच्छामो भिन्नमार्गेण स्वाभिलाषाद् दुर्वाराद् ।—

आनन्दान्न खल्विमानि सञ्जातानि भूतानि भङ्गुरभुवने
सानन्दं क्व वर्तते नु तृष्णापीडजीवोऽत्र काल्पनिकसुखैः ।
धर्मो यः सनातनो हि जम्बुद्वीपवासस्य सोऽपि जनमतो
नव्याः सौगतास्तु विश्वनिर्वाणाय वाञ्छन्ति मध्यमसरणिम् ।।२१३

नालकः ।—भदन्त उपाले ! कुत आगतौ भवन्तौ अधुना ? अपि मृगदावो दृष्टो भवद्भ्यां यत्रातिष्ठदेकदा शाक्यमुनिः ?

उपालिः ।—वाढम् । तत्रैवाहं बुद्धदेवस्य शिष्यत्वं प्राप्तवान् । एष आर्योऽश्वजिच्च तथाऽकरोत् । मृगदाव एव प्रथमं निजधर्मः प्रचारितो बोधिसत्त्वेन ।

नालकः ।—कः खलु बोधिसत्त्वः ? स्वयं बुद्धदेव एव ?

अश्वजित् ।—अथ किम् । न बोधि र्लब्धा देवसिद्धार्थेनापि एकमात्रे जन्मनि । पुरा किल सुमेधनाम्ना महता ब्राह्मणेन सङ्कल्पः कृतो यदहं बोधिं प्राप्य जन्मान्तरे नरदुःखं विनाशयामीति । गच्छति काले दीपङ्करनामा बुद्धप्रायः सज्जनः सुमेधस्य जनपदमागच्छतीति श्रुत्वा सर्व एव जानपदा नववर्त्म रचयितुमारमन्त । सुमेधश्च तत्रोपेत्य कर्दमाक्ते पथार्धे स्वदेहं प्राक्षिपत् । प्रभु र्दीपङ्करो मद्देहे पादौ संस्थाप्य कर्दममतिक्रामतीति स चिन्तयामास । तत्रागतो दीपङ्करः सर्वमाकर्ण्य मनसि विचिन्तयन् भविष्यवाणीम् उच्चारितवान्— जन्मान्तरे गौतमाख्यस्त्वं बुद्धत्वं लप्स्यस इति । बहूनि जन्मान्यतीत्य सुमेधो गौतमख्याते कुले शाक्यानां सिद्धार्थरूपेण बोधिमाप्तवान् ।



नालकः ।—महर्षे र्देवलस्य मुखाच्च एतत्सम्बन्धि किञ्चित् श्रुतं मया परन्तु शैशवहेतो र्न सम्यगुपलब्धम् । महर्षि र्मम मातुल आसीत् ।

उपालिः ।—कथं नैतदुक्तं त्वया प्रागेव ? ऋषिर्देवलः सद्योजातं सिद्धार्थं दृष्ट्वाऽब्रवीत्—शिशुरयं बोधिमवाप्स्यतीति । कुत्रास्ति तत्र-भवानधुना ?

नालकः ।—मातुलो मम स्वर्गलोके तिष्ठति । वर्षमतीतं तस्य देहत्यागकालात् ।

अश्वजित् ।—तद् बोधिप्राप्तं शाक्यमुनिं न दृष्टवान् सः । नूनमेतद् विशोच्यं भूयिष्ठेन । तस्य भविष्यवचनं साफल्यं गतं परन्तु न श्रुतवान् स बुद्धत्वलाभसन्देशम् ।

नालकः । (साश्रुलोचनम्)—अहमपि द्रष्टुकामो बुद्धदेवं न तु वेद्मि कदा वन्दे तच्चरणसरोजम् ।

उपालिः ।—समाश्वसिहि वत्स समाश्वसिहि । भूयसी वासना ते सफली-भवत्येव सत्वरम् । साम्प्रतं मार्गं दर्शयावां गन्तुकामौ । न त्वत्कालक्षेपं कारयावः । किं वदत्यार्याश्वजित् ?

अश्वजित् ।—तथ्यमुक्तं भवता । विलम्बेन तमसाच्छन्नायां निशायां पथिभ्रमो जायते । दिष्टचा वर्धतां पुण्याचरणे विप्रसूनु र्नालकः प्रियबालकः !

उपालिः ।—स्वस्ति मधुरभाषणाय वत्साय ! पन्थानं निर्दिश कृपया नालक !

नालकः ।—इत इतो गच्छतां तालीकुञ्जाभिमुखम् । तत्कुञ्जस्थे चैत्ये तिष्ठति बुद्धद्रेवः ।

अश्वजित् ।—प्रथमः प्रयासः ! बुद्धं शरणं गच्छामि !

उपालिः ।—बुद्धं शरणं गच्छामि !

(उभौ निष्क्रान्तौ)

नालकः ।—परमां मुदं प्राप्तवन्तौ भदन्तौ । अहमपि बुद्धचरणशरणं गच्छामि ।—



मराला: श्रयन्ते तृषार्ता दिगन्तं
ह्रदं मानसाख्यं रमन्ते गतास्ते ।
गृहस्यान्तिके मे मनोराज आस्ते
कथं तं न वन्दे सुधार्चिः किरन्तम् ।। २१४

( निष्क्रान्तः )

---इति प्रवेशकः---



( ततः प्रविशति तालीकुञ्जवेदिकासीनो बुद्धाख्यः सिद्धार्थः । तं परितो निम्नासनोपविष्टाः शिष्याः )

शिष्याः । ( मृदुस्वरेण गायन्ति )---

मायाशाक्यनृपनन्दन कीर्तिवन्दन
राजमध्यममार्गस्यन्दन भूप
जय जय बुद्धरूप !
परिहृतकामिनीकाञ्चन धर्मलाञ्छन
आबालयुवतिबृद्धवाञ्छन धुर्य
जय जय बुद्धसूर्य !
संसारविपाकभञ्जन शक्रगञ्जन
पार्थिवजीवनचित्तरञ्जन धीर
जय। जय बुद्धवीर !
चतुरार्यसत्यसुदर्पण पुण्यतर्पण
निखिलनिर्वाणात्मसमर्पण एव
जय जय बुद्धदेव !! २१५



सिद्धार्थः । (सस्मितम्)—अलं जयवादेन देवीकरणेन तथा मे बन्धवः । सत्यमेव जयते धर्मचक्रं च मरलोके क्षणभङ्गुरे ।—

क्व नु जगति जयति मनुजतनुधनः
क्षणमनिति तु मन इतरपथचरम् ।
सुचरितमभि यदि सरति भुवि जनो
गणय ननु तमिह मणिगुणनिकरम् ॥२१६

काश्यपः ।—भगवन् ! श्रोतुं कामये विस्तरशः प्रथमार्यसत्यवृत्तान्तम् ।

सिद्धार्थः ।—नूनमेतत् सर्वैं विदितम् ।—

दृश्यं यत् प्रकृतेरलीकमिति-वाङ नास्तिक्यवादो मृषा
मिथ्या स्यादपरस्तथैव चटुलः सर्वास्तिवादो ध्रुवम् ।
सत्यं तु क्षणिकं जगत् तनुभृतां क्लेशः स्वसत्ताभवो
जन्म व्याधिचयो जरा च मरणं सर्वं हि दुःखाप्लुतम् ॥२१७

तथाप्यस्ति च दुःखनिर्वृतेरुपायो ज्ञानिनः । प्रतीत्यसमुत्पादविधि-र्दर्शयति दीपं तमिस्रायाम । कारणजातं सर्वं हि कार्यम् । यस्मिन् घटिते अन्यतरदपि तदनुसरति तत्पूर्वगामि तत्प्रथमं कारणं द्वितीयञ्च कार्यम् । द्वेऽपि अचिरस्थायिनी कार्यकारणसूत्रप्रथिते । अतो द्वितीयमार्यसत्यं कथ्यते ।—

नात्मा नित्यगुणो हि वीथिसमकः पाञ्चाङ्गिकै र्निमितः
संघातो ननु नामरूपकथितः स्रोतो यथा सञ्चरेत् ।
संस्काराश्रितचेतना भ्रमयुतं विज्ञानमा जन्मत-
स्तृष्णा सङ्गरतिर्भवोऽथ मुहुः कार्यस्य चक्रं मतम् ॥२१८

अश्वजित् ।—प्रभो, तृष्णा तु कमठग्रह इव न जहाति मानवं संसारवारिधौ व्यालपूर्णे । किं बोधिसत्त्वादृते अन्यः कोऽपि वासनापाशं निःशेषेण छेत्तुं शक्नोति ?



सिद्धार्थः ।—(सस्मितम्) कथं तन्न सम्भवेत् वत्स ? बोधिलाभः सर्वेषां नराणां हि अधिगमनीया न तु केवलं मादृशजनस्य विरलस्य । परन्तु संशयस्तव नामूलकः । एकस्मिन्नेव जन्मनि कामनाहननं दुरूहं भूयिष्ठेन । बहूनि जन्मानि तव मम च व्यतीतानि । कर्म भ्रामयति मनुजं संसारालातचक्रे कामनासाहाय्यकम् । वासनाया यदा हि नितान्तविलयः सञ्जात स्तदैव संसारचक्रं विलीयते जलधौ घूर्णोर्मिवत् ।—अथ तृतीयमार्यसत्यम्—

कार्यस्य प्रभवो यतो हि सततं स्यात् सर्वतः कारणं
मौहूर्ते विरते तु कारण अतः कार्यस्य तस्य क्षयः ।
आर्यं सत्यमवेहि निश्चितमनो दुःखं विलीनं भवेत्
तृष्णाख्यं यदि कारणं नरबुधैः प्रोत्पाट्यते वक्षतः ।।२१९

शारीपुत्रः ।—भगवन्, सन्मार्गस्तु मध्यमपथ एव यः प्रकीर्तितो भवता । केचन वदन्ति निन्दका ईदृशोपायो विलासिन एव भोगकामिन इति ।

मौद्गल्यायनः ।—क्षम्यतां मम वाचाटता देवेन ! शारीपुत्रः स्वयमेव जानाति तादृशी निन्दा कुबुद्धिप्रणोदिता या देवदत्तेन प्रचारिता । क्व मध्यमपन्थाः निशिता धारेव दुरत्यया क्व च विलासस्य प्रमोदरक्ताभोद्यानपथे विचरणं सुलभं दुराचाराणामपि ।

शारीपुत्रः ।—नूनं वेद्मि मध्यमपथस्वरूपं तथागतश्रीमुखवर्णितं परन्त्वादौ विशदतः श्रोतुमिच्छामि साष्टाङ्गप्रणिपातेन तथा परिप्रश्नेन चाष्टाङ्गानां नामानि । पश्चात् शृणोमि विस्तरशः प्रत्यङ्गविवरणम् ।

सिद्धार्थः ।—(सस्मितम्)-शृणुत मम सुनीतिविषयकम् उपदेशं चतुर्थमार्यसत्यम् ।

अष्टाङ्गो महतां हि मध्यमपथो निर्वाणरत्नार्थिनां
सम्यञ्चोऽवयवा मयात्र विवृताः प्रज्ञार्यसत्यव्रता ।
सङ्कल्पः क्रमतश्च वाक्यमनृतं कर्मण्यता शीलधी-
राजीवः परिचेष्टनं स्मृतिरथ ध्यानं समाधेः फलम् ।।२२०



मौद्गल्यायनः ।—सम्यक् प्रबोधितोऽहम् इदानीं वर्णनेन । अपि तु केचन ब्रुवन्ति चत्वारः सन्ति सन्मार्गा इति । किं मध्यमपथादन्यतरास्त्रयो मार्गाः स्युः ?

सिद्धार्थः ।—(वराभयहस्तमुत्थाप्य) सन्मार्गः खल्वद्वैतः परन्तु तस्यैव ऊर्ध्वगामिन श्चत्वारि विद्यन्ते मुख्यसोपानानि ।—

सोपानानि हि चत्वारि भज्यन्ते बन्धनानि यैः ।
इन्द्रियजातानि सर्वाणि प्रत्येकं दशशृङ्खलम् ।।२२१

काश्यपः ।—देव, किं नु स्याद् विशेषलक्षणं सोपानचतुस्टयस्य ?

सिद्धार्थः ।—उत्तमः प्रश्नोऽयं मे बन्धोरुरुवेलाकाश्यपस्य । संक्षेपतो वर्णयामि तत्तद् विशेषम् । सन्मार्गकाङ्क्ष श्चत्वारि आर्यसत्यानि स्वीकृत्य शरणं गच्छति बौद्धं धर्मं संघं च । अतःपरं स मध्यमपथमनुसृत्य अहङ्कारविमोहं जहाति, यज्ञादिषु च न विश्वसिति सुगतवादप्रत्ययं तथा द्रढयति स्वचेतसि । प्रथमसोपानस्यान्तेऽपि तृष्णाहानि र्न जायते सम्यग् यतः संसारचारो वर्तत एव ।

अश्वजित् ।—अहङ्काररहितोऽपि स पुनर्जन्मदुःखान्न प्रमुच्यत इति दुनोति मे चित्तं प्रभो !

सिद्धार्थः ।—(सकरुणम्) वत्स, निर्वाणं न हस्तामलकवत् सुलभं जगति ।—

जायन्ते च म्रियन्ते च जीवा आदौ मुहुर्मुहुः ।
द्रघिष्ठपथसीम्नि स्यान्निर्वाणफलमर्जितम् ।।२२२

शृणुत यूयं पुन द्वितीयक्रमवृत्तान्तम् । एतत्सोपानारोहान्ते सज्जनः संशयहीनो जातो नितान्तं विमुच्यते चात्ममोहेन तथा मदलोभमात्सर्येभ्यः सञ्जातै र्भ्रमैः । स्थितप्रज्ञो जन एष सकृत् प्रत्यावर्तते मर्त्यभूमिं समाधिना क्षेमं लब्धुम् ।—



क्षीणकल्पषो द्विभङ्गमार्गो
वीतसंशयो निरस्ततृष्णः ।
शोकदं सकृल्लभेत जन्म
क्षेमसंरतो भवेत्तु मुक्तः ।।२२३

शारीपुत्रः ।—अथ तृतीयसोपानोत्तीर्णस्य कीदृशमाचरणं कीदृशी वा गति र्देव ? अपि तस्य पुनर्भवः स्यात् ?

सिद्धार्थः ।—न हि न हि, शारीपुत्र प्रियशिष्य ! ईदृशस्य सुधियः पृथ्वीचारो न पुनर्जन्मने कल्पते । निःशेषेण हि तस्य तृष्णा क्षोभश्च शाम्येते । पन्थानमतिक्रामन्ति ये खल्वर्हन्तस्तेषाम् अविद्या तिरोहिता मदस्तथाऽऽत्म-पुण्यम्मन्यता च प्रलीयाते कर्पूरवन्मुक्ताङ्गने पुनर्जन्मवासना चावसिता नितान्तम् । ऋषय एते निर्वाणाम्भसि गाहन्ते रात्रिन्दिवं परमतृप्ति-समन्विताः । अपि तु—

यथात्मप्राणानां विषमविपदः शङ्किता नात्र माता
सदिच्छाभूयिष्ठा प्रियवरसुतं रक्षति स्वैकमात्रम् ।
तथैवार्हन्तो ये निखिलजगतः क्षेममाकाङ्क्षमाणाः
किरन्ति प्रेमार्चि र्नियतमपि ते विस्मरन्तो निजार्थम् ।।२२४

अपि च—

नित्यं यदीदृशनरः स्थिरधीरसुप्तः
क्राम्यन् शयान इह वा वसते निषण्णः ।
तर्हि ब्रवीमि धरणौ चिरपांशुमत्या-
माविर्भवः शुचिरुचेः सुरसत्तमस्य ।।२२५

काश्यपः ।—जानामो वयं देव जानाम इदं पश्यन्तो देवदुर्लभकान्तिं स्वनेत्रा-भ्याम् ।—



क्व स्वर्गः सृष्टः कल्पनारूपसत्त्वो
भोगोद्यानं हि प्रेतनॄणाममर्त्यम् ।
क्व श्रेयस्कामैः सृष्टमार्यप्रबुद्धै-
र्मर्तलोकंच प्रत्युत स्वर्गकल्पम् ।। २२६

उपालिः ।—देव, किं तत्त्वान्वेषणं बुद्धेर्ज्ञानमार्गेण समुचितमस्माकम् ?

सिद्धार्थः ।—वत्स, तत्त्वजिज्ञासा नूनं कल्पते प्रज्ञालाभाय तत्परं क्रमशो निर्वाणप्राप्तये च । परन्तु तर्कसर्वस्वाः पुरुषाः परं लक्ष्यं निर्वाण-पद्मं विस्मृत्य आ मरणं सन्तरन्ति कर्दमाक्ते पयसि वाक्यशैवला-च्छादिते । आर्यसत्यानि सम्यगुपलभ्य पञ्चशीलाश्रितं जीवनं ये यापयन्ति न प्रयोजनं तेषां तर्कोन्मार्गभ्रमणेन । दृष्टचभिधेयं न्याय-रोमन्थनं चित्तोन्मादनं ह्यासववत् ।—

चत्वार आसवाः सन्ति पापात्मकाः पथिप्लवाः ।
कामभवौ तथाऽविद्या दृष्टिश्च कुज्झटिच्छदा ।। २२७

काश्यपः ।—द्वे एव प्रमाणे विद्येते यथार्थज्ञानस्य प्रत्यक्षम् अनुमानं च । अतोऽन्यविधानां ज्ञानानां शब्दादीनां न याथार्थ्यं ग्राह्यम् । नैया-यिकै र्निर्मितानि तर्कहर्म्याणि तथा दार्शनिकैः कल्पिता दृष्टिप्रासादाः खसौधान्येव । संसारचंक्रमणान्न मोक्षं लभन्ते तादृशा जना स्थूल-वस्तुवांछारहिता अपि । कर्म भ्रामयति तान् मर्त्यं एव वारंवारं तैलिकस्य बलीवर्दानिव आवृतलोचनान् । किं न भूतार्थं कथ-याम्यहं प्रभो ?

सिद्धार्थः । ( विहस्य )—वागर्थ स्तथ्यसम्मत एव ते उपमा यद्यपि निष्करुणा भूयसा ।

मौद्गल्यायनः ।—मैत्रकरुणामूर्ति देवः । श्रोतुकामोऽहं भवन्मुखादेव कर्मविषयकं किञ्चित् । कथङ्कारं नु नरात्मनि क्षणिकभावसन्ताने सत्यपि कर्मबन्धनं न विलीयते ? मन्ये इदमपि कल्पनं प्रमाणासिद्धम् ।

सिद्धार्थः । ( सस्मितम् )—प्रमाणतर्केषु रमते मौद्गल्यायनश्च । शृणुष्व दुरूहतथ्यम् ।—आत्मा न कदापि देहस्थः पिञ्जराबद्धो विहङ्ग इव



न च तनु जीर्णवस्त्रवत् । ईदृशी उपमात्मिका धारणा सर्ववस्तु-जीवत्वारोपाद् उद्भूता । न च प्रभेदस्तथा परापरयोर्विद्ययो-रापेक्षिकचरमसत्तासम्बन्धिन्योः । प्रज्ञा स्यादद्वैता एव सर्वेषां कृते न तु विभेदोऽत्र प्राकृतजनानां परमार्थवेत्तॄणां च । निरङ्कुशो मूर्तिचर्चाविरोधो हि गौतमस्य । निर्गुणं चिन्मयमात्रसत्त्वम् आत्मानं न कल्पयामि सानन्दं निरानन्दं वा ।—

नात्मा बन्दी नरमरतनौ पिञ्जरस्थो विहङ्गो
राजेन्द्रो वा परिजनवृतो भावसंघातमात्रम् ।
किं वा भूतं गुणविरहितं शुद्धचैतन्यसत्तं
त्यक्ते देहे लयपरिगते कर्मणाऽऽप्नोति जन्म ॥२२८

मौद्गल्यायनः ।—अथ मे जिज्ञासा प्रभो कथम् एवंविध आत्मा पुनर्जन्म लब्धुं क्षम इति ।

सिद्धार्थः । ( सस्मितम् )—आत्मा विलीन एव मृत्युकाले न प्रयातुं शक्नोति देहान्तरं पुनर्जन्म लब्धुं वा । पुनर्जन्मकृते संसारे न कदापि आत्मनो वायुभूतनिराश्रयस्य सञ्चरणम् इन्द्रजालमायया सम्भवति । व्यक्तिनिराश्रयं व्यक्तित्वमात्मनिर्भरं कर्म एव सञ्जनयति द्वयो-रात्मनः सम्बन्धं यथा हि करोति दीपवर्तिपलितस्य एकस्य द्वितीय-वर्तिपलितस्य । वह्निशिखा ज्वलनात्मिकैव कारणं तथा द्वितीयस्य प्रज्वालनं हि कार्यम् । न द्रव्ययोरपि तु द्वयोः क्रिययोः संयोजनं द्वितीयायाः प्रणोदनं हि कारणायनम् । दीर्घरूपशृङ्खलस्य माध्यमेन नवजन्मन उद्वेजनमात्रं हि पुनर्जन्म संसारकृते ।—

कार्यकारणयोः सूत्रेण योजितं नियतं विश्वजगज्
जन्मतः कुरुते कर्मात्मकारणं नवमन्यच्च तथा ।
दीपवर्तिकयोः सम्बन्धरूपकं ज्वलितज्वालितयो-
र्नात्र संचरते वह्निः सवाहनः करणं हि ज्वलनम् ॥२२९

शारीपुत्रः ।—महाभाग, ममास्ति किंचिद् जिज्ञास्यम् । कार्यकारणबन्ध-चालितस्य मनुजस्य किमस्ति स्वातन्त्र्यम् ? यदि न तत् कथं



हस्तपदबद्धस्य बन्दिनस्तस्य स्वकार्यहेतोर्दोषारोपः प्रशंसालाभो वा विधीयते। न कोऽपि निन्दति प्रशंसयति वा पतनस्य हेतोर्गिरिशिखरात् स्खलितमुपलखण्डम्।

सिद्धार्थः। (सस्मितम्)—न प्रस्तरं चालितम् आत्मनियन्त्रितं स्वप्रणोदितं वा। परन्तु आत्मनः कर्मसंहते विधायको मनुष्यः स्वयमेव। कर्मबन्धनं प्राक्तनमैहिकं च न कयापि निगूढया भाग्यशक्त्या विहितम्।—

देवै ग्रहै र्वा न च तारकाभिः
सृष्टं नियत्या किमु गूढशक्त्या।
भाग्यं नराणां कृतमात्मवृत्तैः
कर्मस्वरूपं फलमत्र भोग्यम्॥२३०

उपालिः।—निर्वाणस्वरूपं तु सम्यक् न परिज्ञाय निर्विण्णोऽहं संजातः। अपि देवः कृपया व्याख्यानं यच्छति सर्वजनबोध्यम्?

सिद्धार्थः। (सस्मितम्)—शनै र्वत्स! अद्य मया बहून्येव तत्त्वानि व्याख्यातानि।—

निर्मातं भ्रमरैः शनै श्चारुमधुचक्रं
कन्थां सूचिकरः शनै र्वै सृजति शिल्पी।
पन्थानं च शनैः सतां विक्रमत आर्यो
निर्वाणं श्रमणैः शनैरेव परिबोध्यम्॥२३१

(ततः प्रविशति सुभद्रेणाणुचरेण सह नृपति बिम्बसारः)

बिम्बसारः।—प्रणमामि महाभागम्! अपि कुशलं सर्वाङ्गीणं भवतः?

सिद्धार्थः।—शुभमस्तु ते राजर्षे! कदा तु अकुशलिता तनुविस्मृतस्य? किं करवाणि महाराजप्रीत्यर्थम्?

बिम्बसारः।—भवतः पदरजसा धन्यं मम राज्यं नास्ति प्रियतरं यतः। तथापि यद्यस्ति भवतोऽवकाश स्तत् निर्वाणविषयकं श्रोतुमिच्छामि भवन्मुखारविन्दात्।



उपालि: ।—मयापि तदमभिलषितं राजर्षे ! परन्तु·········

सिद्धार्थ: ।—महाराजानुरोध: पालनीय एव । सुखासीन: शृणोतु स्तोकम् । परन्तु निर्वाणं खलु प्राकृतशब्दसाहाय्येन दुष्प्रकाश्यम् अनिर्वचनीयमेव । प्रथममेव श्रूयताम्—

न जातु निर्वाणं दीपनिर्वाणवल्लयात्मकं
परन्तु नि:शेषा क्लेशतापस्य निर्वृति र्ध्रुवा ।
अतोऽर्हता लभ्यं जीवताऽपि प्रकीर्णपाप्मना
कृतामराकल्पे भूतले गोपुरं सुखाप्लवम् ।।२३२

निखिलं विश्वं हि वह्निप्रज्वलितम् । कीदृशो नु स वह्नि: ? रागद्वेषमोहदु:खनैराश्यतापन एव । पुनर्जन्म पद्यते दाह्यस्तूपाद् दाह्यस्तूपान्तरं प्रज्वालयता कर्मस्फुलिङ्गेन कामनासृष्टेन । निर्वाणं रागमात्सार्याहङ्कारजीवनेहाज्वलनस्य हि प्रशमनं नै:श्रेयसिकं नान्यत्-किंचिन्नूनं स्तोकाधिकं वा । परिनिर्वाणं तु संसारविमुक्तिप्राप्तस्य जीवनविरति: ।

बिम्बसार: ।—भगवन्, किं नु भवति विमुक्तमानसस्य चिह्नम् ? जानामि पश्यामि च भवन्तं निर्वाणलब्धं विमुक्तपुरुषं परन्तु न सर्वे विमुक्ता मानवा भवतो गुणान् कार्त्स्न्येन लभन्ते इति तर्कयामि ।

सिद्धार्थ: । (सस्मितम् )—निर्वाणप्राप्तात् पुरुषान्नास्ति श्रेयान् कोऽपि मनुज: । एतादृशस्य पुरुषस्य लक्षणं हि साहङ्कारव्यक्तित्वबोधविनाशनम् ।—

स्वदेहद्रष्टादौ परिगतवह्नि र्नन्दनस्वप्नमग्नो
निरन्ताकाशस्थो निरवधिमना: शून्यलोकाधिवासी ।
सचिन्ताचिन्त्यानां च जगदुभयं विस्मरन् यश्चलित्वा
निरस्तप्रत्यक्ष: सरति स ततो धीरतेश्च प्रमुक्त: ।।२३३

शारीपुत्र: ।—प्रभो, मौद्गल्यायनेन तथा मया च एतद् उपलब्धं न तु कदापि चिन्तयामि कोऽत्यन्यो मत्तुल्यो मत्तो गरीयान् लघीयान् वेति ।



सिद्धार्थः ।—(सस्मितम्) प्रीतोऽस्मि भूयिष्ठेन जानामि च स्वयं युवयोः सिद्धि-प्राप्तिम् । वत्स शारीपुत्र सरलहृदय ! तथापि ब्रवीमि भूतार्थम्—

स्ववचोभि बोधिंगतः प्रज्ञां नात्र प्रकाशयेत् ।
निर्दिशेत् स प्रलब्धार्थं नात्मानं तु निरञ्जनम् ।। २३४

पुनरपि वदामि सविनयं न कोऽपि विशदेन वर्णयितुं क्षमो निर्वाणम् अनिर्वचनीयात्मकं प्रकृत्या ।—

यथा ज्वलन्नपि दीपः प्रदाहान्वितः
प्रभञ्जनेन हि निर्वाप्यते सर्वथा ।
उपांशु शाम्यति निर्वाणलब्धस्तथा
न लक्ष्यते तु स यो नामरूपाधृतः ।।१३५

मौद्गल्यायनः ।—स किमु केवलम् अन्तर्हितः किमुत न विद्यते ?

निर्वाणप्राप्तिमात्रेण किं भदन्तो न लक्षितः ।
अथ लीनो भवेदत्र केवलमस्तिवाचकः ।।२३६

सिद्धार्थः ।—दुरूहैषा जिज्ञासा दुरूहतरं च उत्तरम् । तिरोहितस्य नास्ति रूपं न वाऽस्तित्वसूचकं किञ्चिदपि वाच्यम् । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह कथङ्कारं वर्णयामि तत् ?—

चुल्लीगर्भे स्तिमितदहशिखे यावदेकैकशो वै
निर्वाप्यन्ते किमपि सुतरसाऽज्ञेययाना स्फुलिङ्गाः ।
तावन्नूनं व्यवसितमनसो वासनोत्तीर्णमार्गे
शान्तोल्लासे नियतविचरत श्चिह्नमात्रं च लुप्तम् ।।२३७

बिम्बसारः ।—अहो ! किमहि मनोहरं भगवत्कृपाम्बुदवर्षणम् !

सिद्धार्थः ।—मगधराज, मानवः खलु स्वप्रचेष्टनेनैव निर्माति निर्वाणमार्गं दुश्चर-मपि गन्तव्यप्रापणम् । नास्त्यत्र प्रयोजनं असिध्यार्थापत्त्या भगवत्-कृपासम्बन्धिन्या ।

बिम्बसारः ।—महाभाग, किं तथापि नास्माकं प्रकाम्यं ब्रह्मपदशरणं मोक्षदम् ?

सिद्धार्थः ।—(सकरुणवचनम्) न शक्तोऽहं महाराजस्य चित्तशान्तिं विधातुम् । बन्धो काश्यप, त कृतमस्माभि-रातिथ्यविधानम् । मगधाधिपते-



राश्रिता वयम् अतिथिश्च तत्रभवान् अद्यात्र। अतः सर्वै र्मे शिष्यै-
रतिथिशालां नीतः सोऽभिनन्दनीयः।

काश्यपः।—(जनान्तिकम्) सखे शारीपुत्र! भगवतो निर्देशः पालनीयः
सत्वरमेव। न ब्रह्मविषयकं किंचिदधिकं वक्तुकामः सः। अतो
निर्मक्षिकं क्रियताम् अधुनाऽपि।

शारीपुत्रः।—आगच्छतु राजर्षे! आयान्तु अन्ये च सर्वे।

सर्वे।—

बुद्धं शरणं गच्छामि!
धर्मं शरणं गच्छामि!
संघं शरणं गच्छामि!

बिम्बसारः।—वन्दे बुद्धदेवम्। पुनरपि आगच्छामि देवचरणदर्शनाय।
जयतु बुद्धशरीरः केशवः।

(बुद्धमृते अन्ये सर्वे निष्क्रान्ताः)

सिद्धार्थः। (सखेदम्)—दुष्करं खलु सनातनविचिन्ताविसर्जनम्।—

निर्वेदो वेदभिन्नो दिशति नवविधिं तार्किकानामबोध्यं
ब्रह्मब्रह्मादिवर्जा परमगतिरियं केवलं वीरवांछया।
निःशेषेणात्मसर्ग श्चिरविलयकृते तृप्यति क्व स्वसंस्था-
ना मृत्यो गौ तमस्तु प्रतिदिनमवनौ सौगतार्थं विवक्षुः॥२३८

( पद्मासनस्थो ध्याननिमीलितनयन आस्ते )

( पटक्षेपणम् )

—इति सप्तमोऽङ्को धर्मव्याख्यानं नाम—





# अष्टमोऽङ्कः

## —प्रवेशकः—

( ततः प्रविशन्ति त्रयः श्रावस्ती-नागरिकाः )

दुर्भाषः ।— नास्तिकः खलु सुगतो गौतमः ! न जाने कथमार्यतनया भारत-वासिन स्तं वन्दन्ते देवर्षिमिव ।--

यज्ञनिन्दां तथा निन्दां वेदानामतिगर्हिताम् ।
गौतमो नास्तिको नित्यं देवनिन्दां च भाषते ।।२३८

अनाथपिण्डदः ।—न तथ्यमुक्तं त्वया दुर्भाष ! न निन्दति मानुषमपि बुद्धः का कथा देवानां वेदानां वा ! तस्य पुण्यकीर्ति र्लोकमुखेन मत्कर्ण-मागता । रमते शाक्यमुनिः समाधौ तथापि न तिष्ठति गुहागर्भे ध्यानमग्नो जीवनव्यापारविस्मृतः । नित्यं चेष्टते नरदुःखप्रशमनाय



स्वयं शिष्यैः सह । बहवो हि सज्जना स्तद्धर्ममाश्रित्य भिक्षुत्वं गृह्णन्ति लोकसंग्रहाय जीवसेवार्थं च । अहमपि सत्वरं बुद्धचरणं शरणं गत्वा तद्धर्ममाचरामि । महार्घे जेतवने हर्म्यं रचयामि प्रभुसेवार्थं संघाश्रयाय च । मत्कन्या सुप्रियाऽपि भिक्षुचारं कामयते । शैशवे मातुलालये कापिलवास्तुनगरे सा तरुणवयसं सिद्धार्थं दृष्टवती । तस्या हंसं च स देवदत्तहस्तादरक्षत् । तद्दिवसात् प्रभृति सा महाभागगुणानुरक्ता जाता ।

सञ्जयः ।—कथमेतत् श्रेष्ठिवर अनाथपिण्डद ? न रमणी गच्छेद् भण्ड-सान्निध्यं विशेषेतो यौवनदीप्ता कुमारी । त्वं च साधयसे जीवसेवां स्वकर्मणि रत एव । बहवः शिल्पिनस्तवाश्रये जीविकामर्जन्ति रत्नसुवर्णमयान्याभरणानि च रचयन्ति मनोहराणि । सर्वेषु भिक्षुत्वम् अवलम्बमानेषु नरवंशो विलयं यात्येव ।

दुर्भाषः ।—मायाजालं विस्तार्य नरसारङ्गान् विमोहय्य बन्दीकरोति मायानन्दन इन्द्रजालिकः । अपि च कीदृशोऽयं तपस्वी यो वाराणस्यां मृगदावे तिष्ठन् पितृमन्त्रिणा कालायुधेनामन्त्रितः स्वगृहं प्रत्यावर्त्स्य इति प्रतिश्रुतवान् ? अतोऽहं ब्रवीमि विश्वासो नैव स्त्रीषु क्षात्रमुनिषु वा कर्तव्या ।

सञ्जयः ।—मम प्रियत्तमौ शिष्यौ शारीपुत्रं मौद्गल्यायनं च मायामन्त्रेण स्वशिष्यत्वं ग्राहयामास । अहह ! महद्दुर्दैवम् आपतितं जम्बुद्वीपे ।—

सिंहायन्ते जम्बुका जम्बुभोजा
जम्बुद्वीपे छद्मना गूढशब्दा ।
सौराख्याते धार्मिके शाक्यवंशे
संजातो हा हन्त धर्मध्वजोऽद्य ।।२३६

सवंशो ध्वंसं वृणोति पामरः शुद्धोदनसुतः । गौतमीतनयो नन्द-स्तस्य पुत्रो राहुलश्च सौगतमार्गं भजेते रहसि । महाराजोऽपि



स्वयं विभ्रान्तो न जानाति किं कर्तव्यमिति। केवलं घोरकृष्ण-मेघस्य राजतांचलमिव विभाति देवदत्तो देवदुर्लभचरित्रः सनातन-धर्मस्य ध्वजावाहक स्तस्मिन् वंशे।

अनाथपिण्डदः। (विहस्य)—अथ देवदत्तं दुराचारं संमानयति संजयमुनिः। आ जन्मनो हिनस्ति देवदत्तः सिद्धार्थम्। सिंहासनलोभ एव प्रणोदयति तं सर्वकर्मसु यतः स बुद्धदेवं निन्दति अजातशत्रवे च पितृद्रोहार्थं परामर्शं यच्छति।

दुर्भाषः।—तथ्यं न जानासि त्वं श्रेष्ठिवर! बिम्बसारो बलहीनो गृहशत्रुमपि पराजेतुं न शक्नोति कथं तु स स्वराज्यमरातिवेष्टितं च रक्षिष्यति? देवद्विजेषु भक्तिरचला ह्यजातशत्रो युवराजस्य।—

अनार्यचाराः खलसौगता हि
सदैव घृण्यं ननु नास्तिकोक्तम्।
ऋते सुरेभ्यो नृपते द्विजेभ्यो
भवे तु नान्यो मनुजार्चनार्हः॥२४०

अनाथपिण्डदः। (हस्तौ कर्णयोः स्थापयित्वा)—शान्तं पापम्। महतो निन्दायाः श्रवणमपि गर्हितम्। किं न श्रुतं त्वया दुर्भाष वैशाली-नगर्यां वेणुकुञ्जस्थितेन बुद्धदेवेन महाविग्रहो वारितः?

दुर्भाषः।—न यापयामि कालं भदन्तोदन्तश्रवणे। किमलौकिकं साधितं चतुरेण शाक्यसूनुना?

अनाथपिण्डदः।—न चातुर्येण परन्तु जीवकृपया प्रणोदितो मुनिसत्तमः। रोहिणीनद्या जलमाश्रित्य विवदन्ते स्म शाक्याः कोलियाश्च। अनावृष्टिहेतो नदीजलम् अपर्याप्तं जातं तीरद्वयस्थितानां क्षेत्राणां कर्षणाय। अतो योद्धुकामाः शाक्याः कोलियाश्च रणसज्जा नदीतीरयोः समवेताः। तच्छ्रुत्वा बुद्धदेव स्तत्रोपनीतः सर्वं ज्ञातवान्। अथ स राजन्यान् अपृच्छत् कियन्मूल्यं सलिलस्य इति। स्वल्पमेवेति द्वौ सेनापती उक्तवन्तौ। कियद्वा मूल्यं



भूमेरिति पुनरपि स जिज्ञासते स्म । द्वावपि अवदतां स्वल्पमिति । तदनन्तरं सोऽपृच्छत् कीदृशं मूल्यं राजन्यानां जीवितानामिति । अमितमेव द्वावपि अभाषेतामिति ।

दुर्भाषः ।—इति-बाहुल्येन कर्णज्वरो जातो मे । संक्षेपतो ब्रूहि चतुरस्य बालचापलं श्रोतॄणां तेषां मनोरंजनं यद्यपि ।

अनाथपिण्डदः ।—सार्थकनामा खलु त्वं दुर्भाष ! सद्वाक्येष्वपि खलतां पश्यसि । तथा हि—

व्रणं हि नित्यं मृगयन्ते मक्षिका
न जातु पुष्पं कुरुते तासां मुदम् ।
मधुव्रतार्थं कुसुमान्तःसौरभं—
क्व वेत्ति दोषं गुणमुग्धः सज्जनः ।।२४१

संजयः ।—श्रेष्ठिवर ! राजन्याः किमकुर्वतेति श्रोतुं काङ्क्षे ।

अनाथपिण्डदः ।—वदामि यावत् । राजन्यानां वचनमाकर्ण्य महाभागः सस्मितं बभाषे भूयिष्ठं हातुमिच्छत उभयपक्षौ अकिंचनस्य हेतो-रिति प्रतिभाति मे किमेतद् युक्तमिति । जातककथामेकां च स तद्विषयकां वर्णयामास । तत्सर्वं श्रुत्वा मूढतां विहाय राजन्याः सन्धिमकुर्वन् बुद्धसेवार्थं च सार्धद्विशते सैनिकान् प्रेरितवन्तः । सैन्यास्तु सौगत-धर्मम् आश्रयन्त सद्यः । नित्यमेव नरदुःखविनाशाय यतमान आस्ते शाक्यमुनिः कृपार्णवः ।—

स्वसुखमविगणय्य भ्राम्यति क्षान्तिमूर्तिः
प्रतिदिनमपरेषामार्तिशान्त्यामतन्द्रः ।
स-नरपशुविहङ्गांश्छायया सान्त्वयित्वा
विचरति भुवि किंस्विन्मङ्गलो बोधिवृक्षः ।।२४२

क्षात्रवंशावतंसः क्षेमधर्मा क्षौमवासा लोकक्षयं निवार्य चिरसौख्यमार्गं दर्शयति यथा प्राकृतान् तथा क्षितीशानपि । प्रणमामि तं विश्व-वरेण्यं महर्षिम् ।



सञ्जयः ।—कथं न स कृपासिन्धुः संमानयति नाटपुत्रं वर्धमानं पुण्यव्रतम् ? कथं न बिम्बसारराज्ये स्थातुं क्षमः स तथाऽहम् ? महाराजः श्रावस्तीश्वरः प्रसेनजिदपि तन्मायामन्त्रमुग्धः परधर्मं भयावहं गृहीतवान् शङ्कितोऽपि ।

अनाथपिण्डदः ।—न कमपि हिनस्ति अहिंसाव्रतो बुद्धदेवः । स्वेच्छया तद्धर्मं श्रयन्ते शान्तिलिप्सवः ।

सञ्जयः ।—(सक्रोधम्)—मरणशान्तिलिप्सवो मूढा एव !—

यथा पतङ्गाः श्रयन्ते प्रदीपं
ध्रुवां विनष्टिं विमूढा लभन्ते ।
तथैव मत्ताश्चरित्वा प्रतीपं
भवन्ति मर्तुं कुबोधैर्हि भक्ताः ॥२४३

दुर्भाषः ।—सुश्राव्यं खलु जिह्वानर्तनं तपस्विनः सञ्जयस्य !

सञ्जयः ।—त्वमपि मामुपहससि ?

दुर्भाषः ।—मन्ये त्वमपि सुगतशिष्यत्वं कामयसे अज्ञातनिजमना अतो निन्दापल्लवेन श्रद्धाङ्कुरं गोप्तुं प्रक्रमसे ।

सञ्जयः ।—स्थानत्यागेनैव दुर्जनो दुर्भाषः परिहर्तव्यः ।

(सरोषं निष्क्रान्तो द्रुतचारेण)

अनाथपिण्डदः ।—किं दुर्भाषः सुभाषायते परिहासच्छलेन उत मतपरिवर्तनहेतोः ?

दुर्भाषः ।—बन्धो ! दुर्ज्ञेयं नरमानसम् अगाधसिन्धुसलिलमिव । सनातनो धर्मः प्रकम्पितः सुगतवृत्तै रतो धर्मपालका जानन्ति न किं कर्तव्यमिदानीम् । नाहं धर्मव्रतः स्वयं तथापि चिन्तयामि एवंविधम् । दुर्बलानां नराणां कृते सनातनो धर्म एव श्रेयान् । निरीश्वरवादस्तु वीरधार्य श्चिरेण ।—



आत्मजनककल्पो ज्ञातो जगदीश्वरो
रक्षति विपदो नो दत्ते च स वांछितम् ।
दुर्बलमनुजार्थं धर्मो हि सनातनः
सौगतमथ मन्ये न प्राकृतशंसितम् ।।२४४

अनाथपिण्डदः ।—कथमेतत् वदसि त्वम् ? दुःखनाशवाणीदं सोगतधर्मं श्रयन्ते संख्यातीताः प्रतिदिनम् । नास्त्यत्र काल्पनिकलोकस्य स्तुतिवादो न च निगूढतत्त्वस्य इङ्गितम् । दुर्बला अपि वीरायन्ते स्वशक्ति-माहात्म्यमाकर्ण्य । लौकिकभाषया च सर्वत्र प्रचारितानि पंच-शीलतत्त्वानि । प्राकृतजनानां कृते हि सुगतस्य सुबोध्यो धर्मो बोधि-प्राप्तेराशा च भृशमाकर्षन्ति बुद्धिजीविनो मनुष्यान् । कुत्र चास्ति मधुरतरा वाणी सर्वजीवप्रेमवार्तायाः । नूनं हि जेष्यति बौद्धधर्मो विपुलायां धरण्यां निरवधौ काले च ।

दुर्भाषः ।—नाहं त्रिकालज्ञ ऋषिः । तथापि विचारयामि तव वाक्यं सुजन-मुखनिःसृतम् ।

(चिन्तान्वित एव प्रस्थितः)

अनाथपिण्डदः ।—अहो ! अपूर्वो हि महिमा बुद्धमतस्य ।—

स्पर्शमणिरेव सुगतस्य करकोषो
दुर्मुखमयश्च कनकीकुरुत आन्तम् ।
विश्वजलधे नु हृदये स्थलनलिन्यां
प्रेमकरुणार्चिरुदितं किमरविन्दम् ।।२४५

वैशालीनगर्युपान्ते रसालकुंजे आम्रपालीनाम्नी वाराङ्गनाऽपि बुद्ध-वाङ्मुग्धा भिक्षुत्वमवालम्बत सुरम्याट्टालिकां च संघाय प्रायच्छत् । अपि च—



चैत्ये गृध्रकूटस्थे राजसद्मनगर्यां
नालन्दाविहारे च प्रेक्ष्यपुष्पनिकुंजे ।
निन्ये वश्यतामार्यो दन्तकूटनिषेकान्
किं मन्त्रौषधि र्व्यर्था देवदत्तभुजङ्गे ॥२४६

(ततः प्रविशति पुष्करः)

पुष्करः ।—कष्टं भोः ! महत्कष्टमापतितं मगधराज्ये निर्मेघाम्बराद् वज्र-पतनमिव ।

अनाथपिण्डदः ।—(ससम्भ्रमम्) किं नु घटितम् आर्य ?

पुष्करः ।—देवदत्तस्य कुमन्त्रेण प्रणोदितो दुर्दान्तोऽजातशत्रुः स्वजनकं बिम्बसारं हन्तुमुद्यतः । तच्छ्रुत्वा स्वयमेव महाराजः सिंहासनं तत्याज पुत्रस्य राज्याभिषेकं च विहितवान् ।

अनाथपिण्डदः ।—तत् प्रीतः स्यादधुना अजातशत्रुः ?

पुष्करः ।—न जानासि खलवृत्तम् आर्य ! तथापि न निरस्तौ द्वावपि पामरौ । देवदत्तो बुद्धदेवं निहत्य संघपतित्वं लब्धुं चेष्टतेऽनिशम् । अजातशत्रुस्तु महाराजो बिम्बसारः पुनो राजकिरीटं काङ्क्षते इति मत्वा पितरं बन्दीकृतं जघान स्वहस्तेनैव ।

अनाथपिण्डदः ।—नृशंसकृत्यं पाषण्डस्य !

पुष्करः ।—पितृरक्तकलुषितकरो देवदत्तेन रात्रिन्दिवं प्रणोदितो बुद्धदेवं हन्तुकामो विचरति रहसि । न जाने कदा स महापातकं सम्पादयति ।

अनाथपिण्डदः ।—अतीव करुणं परमशोचनीयं च वचस्तव भदन्त ! सद्य एवाहम् अनाथपिण्डदो बुद्धं शरणं श्रित्वा तस्य पार्श्वचरो भवामि ।

पुष्करः ।—पुष्करस्त्वामनुसरति, आर्य अनाथपिण्डद अनाथपालक !

अनाथपिण्डदः ।—एहि पुष्कर ! सत्वरं यास्यावो बुद्धसमीपम् ।



उभौ ।— बुद्धं शरणं गच्छामि !
धर्मं शरणं गच्छामि !
संघं शरणं गच्छामि !

( निष्क्रान्तौ )



—इति प्रवेशक:—

( तत: प्रविशति ससाध्वसं शारीपुत्र: )

शारीपुत्र:। (उच्चस्वरम्)—पलायध्वं पलायध्वं भिक्षव: ! महाभागं राजपथान्निवारयत ! धावति रंहसा चलद्भूधर इव मत्तमातङ्गो नीलगिरि: । पदभारेण मेदिनीं प्रकम्प्य ऊर्ध्वशुण्डो गर्जति मेघडमरुवत् । सम्मुखस्थान् नरान् करेण क्षिपति वियति यथेच्छं दलति च शिशुदर्शं पदतले नृशंस: क्षिप्तजन्तु: । मौद्गल्यायन ! काश्यप ! उपाले ! देवमपसारय वर्त्मन: सत्वरम् ।—

क्षिप्तहस्ती नीलगिरि र्मूर्तकृतान्त:
शुण्डास्फालै: पांशुमपास्यन् गगनोर्ध्वम् ।
चर्णीकृत्य स्वांघ्रितले हन्त शिरांसि
दन्ताघातै र्दीर्यति वक्षांसि शिशूनाम् ।।२४७



( ततः प्रविशति धावन् काश्यपः )

काश्यपः ।—कष्टं भोः ! न शृणोति वचोऽस्माकं महाभागः । न जहाति निजवर्त्म स क्रन्दत्सु अस्मास्वपि । किं करोमि क्व गच्छामि ? हन्तुमिच्छति देवं पाषण्डो देवदत्तः साफल्यं च यास्यति प्रयासस्तस्य ।

शारीपुत्रः ।—तदिदं देवदत्तेन विहितम् ? बिम्बसारमपि निघात्य न सन्तोषं गतः स ! स्वयमेव संघाधिपो भवितुं चेष्टते छलेन बलेन किमु कौशलेन ।

काश्यपः ।—नवनृपतिं नन्दं गौतमीपुत्रं प्राणोदयद् बुद्धदेवस्य हननाय परन्तु तन्नियोजिता एकत्रिंशन्नृशंसा अपि देवमाहात्म्येन मुग्धाः सन्तः संघं विविशुर्भिक्षुरूपेण । तथापि नवकौशलमाश्रित्य हन्तुकामोऽद्य सः ।—

किमिति वृषलः प्रेमात्मानं द्विषत्यनिशं भृशं
छलबलधृतो हन्तुं देवं दिवाऽपि स चेष्टते ।
तरुणतपनं हिंस्रो राहुर्ग्रसिष्यत ईर्षया
सुचिररजनौ नूनं पृथ्वी निमज्जति सत्वरम् ॥२४८

( ततः प्रविशति सशिष्यः सिद्धार्थः )

सिद्धार्थः । (हस्तमुत्थाप्य)—

शृण्वन्तु सर्वे मनुजा ममोक्तं
जीवेष्वहिंसा नियतं प्रशस्ता ।
दुःखाश्रुमग्ने जगति स्फुटन्ति
प्रेमांशुदीप्ताः प्रसवा ह्यजस्रम् ॥२४९



शारीपुत्रः ।—प्रभो ! मत्तकरी आयाति द्रुतवेगेन । न स्थातव्यं न स्थातव्यं भवता पथि । यावद् वयं सन्निहितं बालोद्यानं संश्रयामहे ।

सिद्धार्थः ।—न पलायितुं क्षमोऽहं वत्स पश्यन्नपि मत्तमातङ्गम् । वृद्धवनिता-बालान् हनिष्यति स मार्गचरान् । तेषां रक्षणं प्रथमं कर्तव्य-मस्माकम् । गृहस्थाः पलायिताः परन्तु सन्न्यासिषु न युज्यते रक्षणीयान् अरक्षित्वा स्वप्राणहेतवे पलायनम् ।

मोद्गल्यायनः ।—तदहम् अग्रतश्चरामि । मातङ्गस्य कोपवह्निः प्रथमं दहतु मामेव ।

सिद्धार्थः । ( सस्मितम् )—किं मौद्गल्यायनो भवति अद्य प्रभृति मम पथप्रदर्शकः ? अपिच प्रियबन्धून् विपन्मुखे निक्षिप्य न सुखं व्रजितुं शक्येऽहम् ।

आनन्दः ।—भवतु, अहं चलामि तव पार्श्वे । मम भ्रातुर्गुरोश्च जीवनं मया सर्वथा रक्षणीयम् ।—

मातङ्गोऽयं मदोन्मत्तः शाक्यं यदि हनिष्यति ।
आनन्द एव कुर्वीत हिंसकेहितपूरणम् ।। २५०

सिद्धार्थः । ( सस्मितम् )—अथ आनन्दो भविता त्राता मे ? अपि च कनीयांसं भ्रातरं रक्षितुं मयैव चेष्टितव्यम् । न प्रज्ञावादं भाषसे भ्रातरानन्द ! मम प्राणानेव काङ्क्षते देवदत्तो नात्र कस्याप्य-न्यस्य । मम जीवनत्राणार्थं यास्यत्यमूल्यं जीवनं तव देवदत्तस्तु न विरंस्यति स्वकाम्यसाधनात् ।

शारीपुत्रः । ( नेपथ्यमवलोक्य )—हन्त ! पुत्रप्राणरक्षार्थं गृहान्निर्गता माता हस्तिमुखे पतिता । पदमुत्थाप्य तामाहन्तुम् उद्यतो नीलगिरिः । गच्छाम्यहम् । ( बहिर्यातुम् उपक्रमते )

सिद्धार्थः । ( शारीपुत्रं प्रसह्य निवार्य )—स्थिरो भव वत्स ! अहमास्मि अत्रैव । ( नेपथ्यमुद्दिश्य )—



माध्वीकृतोन्माद पर्वताङ्ग मूढमातङ्ग
क्षीणाङ्गनामद्य हिंस्रवृत्त चेष्टसे हन्तुम् ।
सिद्धार्थघाताय देवदत्त एव जीवघ्नः
प्राणोदयत्त्वाऽथ नान्यकर्म युज्यसे मन्तुम् ।। २५१

आनन्दः । ( सोल्लासम् )——आश्चर्यम् आश्चर्यम् आश्चर्यम् ! महदाश्चर्यं घटितम् ! जिघांसुर्गजपतिः सहसा विगतमादनो भूमावुपविश्य शुण्डभङ्ग्या महाभागं प्रणमति ।

सिद्धार्थः ।—

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहे ।
इत्येव नः पंचशीलं समाचर्यं प्रकीर्त्यते ।। २५२

( नेपथ्ये हस्तिमुख एव ध्वनति )—

"अहिंछा सच्चमत्तेयं बम्मचज्जापलिग्गहे ।
इद्देव णः पँच्चसीलं समाचज्जं पकीत्तते ।।"

काश्यपः । ( सविस्मयस्फारितलोचनम् )—अलौकिकं संघटितम् । स्थिरीभूतो नीलगिरिः परमस्नेहेन शुण्डधृतं शिशुं मातुरङ्के स्थापयति मनुष्यवाचा च पंचशीलश्लोकम् उच्चारयति !

आनन्दः । ( सोल्लासम् )—किमिव मधुरं करिकथनं शिशुजल्पितमिव अर्धस्फुटम् !

सिद्धार्थः । ( हस्तिनमुद्दिश्य )—

मा कुरु हिंसां विश्वजने
प्रेम हि मर्त्ये मङ्गलदम् ।
श्रेयः इहार्यः संश्रयते
यद्यपि जन्तुः सौख्यकरम् ।। २५३



( शिष्यान् प्रति )—आगच्छत भ्रातरः ! हस्तिवरं संवर्ध्य राजमार्गं त्यक्त्वा पितृदर्शनाय गन्तव्यं मया ।

( निष्क्रान्तः काश्यपानन्दानुसृतः )

उपालिः ।—अस्फुटं वचनं किं हस्तिन एव आसीत् किमुत हस्तिकरस्थितस्य माणवकस्य ?

शारीपुत्रः ।—सखे, कथं सन्दिग्धमना जातस्त्वम् ? इन्द्रजालवदेव संघटितमलौकिकम् अद्य ।

मौद्गल्यायनः ।—किं श्रुतं पूर्वं केनचिदपि यत् मन्त्रमुग्धो मातङ्गो जिघांसां विस्मृत्य मुहूर्तेन सेवमानः स्याद् मानवशिशुम् इति ? अलं संशयेन बन्धो उपाले !—

प्रत्यक्षीकृतं हि समन्ताद् राजाध्वन्यलौकिकं यन्-
माहात्म्यं प्रभोस्तु न योग्यस्तस्मिन्नार्य संशयस्ते ।
आत्मप्रत्ययेन परात्मा वाचालीकरोति मूकं
पङ्गुं लंघयेच्च गिरीशं तस्माद्गुरोः किमत्र चित्रम् ।। २५४

उपालिः ।—यत् सम्भाव्यं तदेव घटते न कदापि तस्मादन्यत् । एतच्च बुद्धदेवस्यैव उपदेशः शिष्यान् प्रति । अप्राकृते न विश्वसिति स्वयं तत्रभवान् । अत्र हि महाभागस्य दिव्यमूर्तिं दृष्ट्वा जलदगम्भीरं स्वरं चाकर्ण्य वश्यतां नीतो गृहपालितो गजराजो यस्योन्मादनाजनिता पर्याप्तसुरापानेन देवदत्तनिर्देशात् । तथापि वदामि लोकोत्तरो हि प्रभो र्महिमा येन मत्तहस्त्यपि कुक्कुरायते आदेशपालनात् । जन्तवो जानन्ति हिंसाहिंसयोः प्रभेदम् अशिक्षितवपाटवादेव ।

शारीपुत्रः ।—किं न कालभुजङ्गा दशन्ति बालकानपि ?

मौद्गल्यायनः ।—किं न शार्दूलै र्हन्यन्ते सरला वनेचरा अपि ?



उपालिः ।—प्रायेण भयहेतो र्व्याला नरान् जिघांसन्ति । महात्मानः प्रेमपूर्ण-हृदया न जनयन्ति शङ्कां हिंस्रप्राणिचित्तेष्वपि । अतो नाक्रम्यन्ते ते हिंस्रजन्तुभि र्यद्यपि व्यतिक्रमाश्च सन्ति विषयेऽस्मिन् । ( सस्मितम् )—व्यतिक्रमास्तु प्रमाणीकुर्वन्ति नियमम् !

शारीपुत्रः ।—मम चिन्ताधारा प्रवहति भिन्नमार्गे । महाभागस्य बुद्धदेवस्य नास्ति किंचिदपि नरसुलभम् ।—

आश्चर्यां शक्तिं प्रकटयति चेत् पंचशीलो महौजा
आजन्माराध्यं व्रतमतिशयां तस्य सिद्धिं विधत्ते ।
लोकक्षेमाय श्रयति चरितं मर्त्यरूपं हि धर्मः
संसारेऽप्यत्र त्रिदिववसते लौकिकं नास्ति किंचित् ।। २५५

मौद्गल्यायनः ।—विषयान्तरं ब्रवीमि । भगवतो देहरक्षिरूपेण आनन्दस्य निर्वाचनं विस्मयकरमासीत् । देवेन यदोक्तं को भिक्षु र्मम स्थायि-देहरक्षी भवतीति तदा मयैव प्रथमं प्रभुसेवार्थं प्रकाशितोऽभिलाषः । परन्तु स तूष्णीमास्त ।

शारीपुत्रः ।—तदनन्तरम् अहमपि मत्सेवाम् उत्स्रष्टुकामोऽभवम् । तथापि सम्मति र्न दत्ता प्रभुणा । क्रमशश्च अन्येऽपि सर्वे शिष्याः स्ववासनां प्राकटयन् । केवलम् आनन्दो मौनमवालम्बत ।

मौद्गल्यायनः ।—अतो महाभागो वाक्यमिदं बभाषे नान्यैः प्रणोदितो भवेदानन्दः परन्तु स्वेच्छया निजकामनां प्रकाशयेदिति । आनन्द उवाच—

अदेयमस्ति देवेन मह्यं वस्तुचतुष्टयम् ।
चत्वारोऽन्ये वराः सन्ति दातव्या मे तु सर्वदा ।। २५६

शारीपुत्रः ।—एतच्छ्रुत्वा सर्वे विस्मयापन्नाः कानि द्रव्याणि तु न दातव्यानीति विचिन्त्य ।

उपालिः ।—कानि नाम भवेयु र्भगवता न दातव्यानि ?



मौद्गल्यायनः। (सस्मितम्)—देवेन पृष्ट आनन्दः पुनरपि ब्रवीति।—

देवहस्तान्न देयानि मे दिव्यवस्त्राणि चामन्त्रणं
रम्यगेहं सुभोज्यं तथा किन्तु मे प्रार्थिताः स्युर्वराः।
गुह्यभाषो हि सार्धं मया तथ्यविश्लेषणं प्रांजलं
सर्वमामन्त्रणं मन्मुखाद्दर्शनं मामकेऽभ्यर्थिते॥ २५७

उपालिः।—आनन्दस्य तादृशौ अभिलाषौ महाभागस्यैव विपन्निराकरणाय तथाऽन्तरङ्गस्य ज्ञानलाभो लोकाविद्यानिरसानर्थम्। अर्हत्वा-प्राप्तोऽपि आर्य आनन्दो महाभागेन सर्वा वरा दत्ताः स्नेहप्रकर्षहेतो स्तथा तस्य प्रतिभाशीलत्वहेतोश्च। न कदाप्यपात्रे पतति कृपा-कल्पतरोः वरफलम्। कामं सर्वे वयं भगवत्प्रीतिधन्या तथाप्या-नन्द स्तस्य पार्श्वचरो प्रियभ्राता च ज्ञातिसम्पर्केण। न तु वयं द्रुह्याम आनन्दाय कर्मणा वाचा मनसा वा।

मौद्गल्यायनः।—आनन्देन नादौ दर्शितोऽत्युत्साह इत्येव हि मन्ये कारणं तेन सेवकपदलाभस्य। दुर्बोध्यं खलु लोकोत्तरचेतो न वयं विज्ञातु-मर्हामः! धन्यः खल्वानन्दो यः सर्वेषु शिष्येषु प्रियेष्वपि भवत्सु महाभागस्य विश्वासपात्रतामगच्छद् भूयिष्ठेन!

शारीपुत्रः।—सखे मौद्गल्यायन! कथयामि ते भूतार्थम्।—

अनादर स्तथा प्रीतिः काम्यौ द्वावपि धीमतः।
अगाधो बोधिसिन्धुर्हि प्राकृतदुष्प्रवेशनः॥ २५८

उपालिः।—आनन्दस्य निर्वन्धातिशय्यहेतो हि भगवान् नारीणामपि संघप्रवेशम् अनुमोदितवान्। तथागतः प्रथमं नैच्छत् तासां भिक्षुत्वग्रहणं यद्यपि पञ्चशीलवृत्ति नरमात्रस्य कामयामास। अथानन्दो भग-वन्तमपृच्छत्—किं नार्यो न शक्नुवन्ति बुद्धत्वं लब्धुमिति। तत्र-भवानवदत् स्मितेन ता अपि शक्ता बोधिं प्राप्तुं परन्तु ताभिः संघप्रवेशो न कल्पते संघसमृद्धये इति। तथापि स आनन्दप्रार्थनां पूरयामास मनाग् उद्विग्नचित्तः।



शारीपुत्रः ।—यतो निर्वाणमेव निखिलनराणां श्रेयसे प्रभवति तद् योषितां संघाश्रयः सर्वथा युज्यते । परन्तु एतद् जानन्नपि भगवान् अस्मद्दौर्बल्यहेतो र्हि चिन्तान्वितो बभूव ।

उपालिः ।—प्राकृतजनानां क्षेमप्राप्तिः संघाश्रय एव नातिदुरूहा स्यात् न तु निजभवनेषु । महादेवी गौतम्यपि भिक्षुत्वं ग्रहीतुं नितरां वांछति ।—

"को नार्चयेत् प्रवरकाञ्चनराशिगौरं
बुद्धं विशुद्धकमलायतपत्रनेत्रम् ।
यत्राधिकारजनितानि वराङ्गनानां
रेजु र्मुखानि कमलायतलोचनानि ।।"

मौद्गल्यायनः ।—नूनं श्रीमतीप्रमुखा वरवर्णिन्यः संघश्रियं वर्धयन्त एव । ईदृशी विना भिक्षुसंघो न लभते पूर्णावयवत्वम् ।—

श्रीमती सुप्रिया क्षेमा शुक्ला सोमा तथाऽपरा ।
मुक्ता कुवलया चैव सुन्दरी च कचङ्गला ।।
यशोमती च जात्यन्धा काशिकसुन्दरी तथा ।
मल्लपताकया सार्कं विरूपा च वराङ्गनाः ।। २५६

इमानि नारीरत्नानि सर्वेषामनुमतानि मन्ये ।

शारीपुत्रः ।—वाढम् ।—

"ये भजन्ति सदा बुद्धं बौद्धधर्मपरायणाः ।
तेऽपि च मानवा बौद्धाः संबोधिपदसाधिनः ।।"

मौद्गल्यायनः ।—यथा नारीणां तथा पुरुषाणामपि कर्मबन्धनात् मुक्ति र्लभ्याऽपि अतीव दुरूहा ।—



"न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ।।"

उपालिः ।—पन्थानं दर्शयन्ति सर्वान् तथागतः प्रभुरस्माकम् । धन्या वयं ये तच्छ्रीमुखनिःसृतानि सुधास्यन्दवचांसि श्रृण्मः स्वकर्णाभ्याम् ! अस्माभिः कैश्चन रच्यतामितिहासो भगवल्लीलासम्पुटः ।—

आगामिनि स्युः समये मनुष्याः
श्रुत्वा पठित्वा सुगतस्य वृत्तम् ।
ईर्ष्यन्ति नो ये परमेष्टलब्धान्
तेषां मुदार्थं भवतु प्रयत्नः ।। २६०

( ततः प्रविशति सुभद्रः )

सुभद्रः ।—भदन्ताः ! पापात्मा देवदत्तोऽद्य पंचत्वं गतः ।

शारीपुत्रः ।—न जाने किमहं सुखित उत दुःखितः ! परन्तु किं तथ्यं वदसि सुभद्र स्वनेत्रदृष्टम् ?

मौद्गल्यायनः ।—स्वस्थ आसीत् देवदत्तो योऽद्यापि प्रभुं निहन्तुं चेष्टते स्म । कथङ्कारं स प्राणांस्तत्याज ?

सुभद्रः ।—देवदत्तो मृत एव न पुन र्यतते भगवतो विषमं विधातुम् । तस्य पापमेव ज्वलदग्निरूपं धृत्वा तम् अज्वालयत् ।

उपालिः ।—कथङ्कारं भाव ?

सुभद्रः ।—अद्य यदा भगवान् जेतवनाद् गृहगमनाय निष्क्रान्त स्तदैव स मूढो यष्टिं हस्ते गृहीत्वा तं प्रति धावितः ।

शारीपुत्रः ।—ततस्ततः ?



सुभद्रः ।—यष्टिनिक्षेपणात् प्रागेव तस्य पदतलभूमिर्द्विधा बभूव । मृदु भूमिप्रकम्पनं च सञ्जातम् । पातालाद् बहिर्गता वह्निशिखा देवदत्तं प्रज्वालयामास । तथागतस्य केशाग्रमपि स स्प्रष्टुं नाशक्नोत् । परन्तु प्राणभयात् स बुद्धं शरणं गच्छामीति वक्तुं प्रक्रमते स्म । अश्रुसिक्तलोचनः प्रभुस्तं प्रति धावमानस्तं न रक्षितुं क्षमः सगद्गदवचसा च स्वस्ति ते इत्यवोचत् ।

उपालिः ।—दुराचारः स्वनियतिं लब्धवान् । पंचकृत्वः स तथागतं हन्तुं चेष्टयामास ।

मौद्गल्यामनः ।—एकदा देवदत्तो भिक्षूणां क्लेशार्थं छिन्नपरिधानं तथा गुहावासं निरामिषभोजनं च विधातुं प्रायतत । यदा भगवता तस्य परामर्शो न गृहीतस्तदा स गयापीठं गत्वा पञ्चशतानि नवदीक्षितान् भिक्षून् विद्रोहालम्बनार्थं प्रारोचयत् । परन्तु शारीपुत्रस्य मम च चेष्टायाहेतोः स व्यर्थकामो जातः । एतेन तस्य क्रोधविद्वेषतुषानलो महानभवत् । आधेस्तस्य व्याधिः संजातः । भवतु, स्वकर्मफलं लब्धं तेनाद्य ।

शारीपुत्रः ।—क्षमामहे वयं सर्वे परलोकगतं पाषण्डम् ।—

निन्दनं भवति प्राप्यं यावन्नरो धरातले ।
गतस्य शोचना नास्ति परीवादो मृतस्य वा ।।२६१

आयातं सखायौ ! बुद्धचरणं वन्दितुं गच्छाम सर्वे ।

अन्यौ द्वौ ।—सत्वरमेव !

(निष्क्रान्ताः)

(पटपरिवर्तनम्)



(ततः प्रविशति सिद्धार्थो राहुलेण सह राजभवने)

सिद्धार्थः ।—वत्स ! कथं मया सह वत्स्यसि ? त्वं राजपुत्रः शाक्यराज्यस्य भावी नृपतिः । पिता ते सन्न्यासी संघविहारवासी ।

राहुलः ।—पितः ! त्वमपि राजपुत्र आसी यौवराज्य चाभिषिक्त स्तथापि सिंहासनं त्यक्त्वा सन्न्यासं गृहीतवान् । पितु र्यः पन्थाः पुत्रस्य स एव भवतु ।—

भवन्ति विश्वे बहवो महान्तो
विचित्रमार्गाः परिदर्शितास्तैः ।
कथं नु वेद्मि प्रगतिं वरिष्ठां
पिता श्रितो यं स ममास्तु पन्थाः ।।२६२

सिद्धार्थः ।—किं तव जननी दास्यत्यनुमतिं ते भिक्षुत्ववरणाय ?

राहुलः ।—अथ किम् । साऽपि सन्न्यासं ग्रहीतुं नितरां कामयते । अधुनैव सा भिक्षुवेषं परिदधाति भिक्षुवच्च शयनाहारादीनि कुर्वन्ती आस्ते ।

सिद्धार्थः ।—कुत्र तिष्ठति तव जननी ? किं सा मत्समीपमागच्छति ?

राहुलः ।—यदाहं त्वां द्रष्टुकामा निर्गतोऽवरोधात् तदा मातरमपृच्छम् अपि त्वं तथागतम् अभिनन्दयितुं यास्यसीति । सा साश्रुनयना सस्मितं चाब्रवीद् आ मृत्योरहं तं द्रष्टुकामा परन्तु यत् स मां विहाय वनमगच्छत् तत् स्वयं स मत्सन्निधिं नागच्छेत् चेत् कथं पश्यामि तच्चरणमिति ।

सिद्धार्थः ।—पन्थानं दर्शय पुत्र ! स्वयमहं यास्यामि ते मातुः समीपम् ।

राहुलः ।—यद्येष तवाभिलाष स्तन्माता मे अत्रैवागच्छति । तवादेशं वाहयामि झटिति ।

( प्रस्थितः )



सिद्धार्थः ।—हृदय मा उत्ताम्य ! अपापविद्धा विप्रकृता मया परन्तु संसारार्ति-विनाशेप्सुनैव सा परित्यक्ता । क्रूरताऽपि स्थलविशेषतो दाक्षिण्य-मपि अतिक्रामतीति मे निश्चयः ।—

शैशवतो यया परिगतं मम गृहशरणं
विप्रकृता कठोरमपि सा प्रणयवनशिखिनी ।
व्याधवदत्र दुर्जनकृतं विहितमवरणं
हन्त तथापि कुप्यति न मे किमिति विरहिणी ।। २६३

परन्तु गृहत्यागोऽपि कर्तव्य आसीन्मम निखिलदुःखहन्तुकामस्य । द्विधा भिन्नं करणीयं प्रतिभाति स्म निष्क्रमणकाले अपि तु महत्तर-लक्ष्यहेतो र्निष्करुणचरितमवलम्बितं मया ।—

निजनिखिलविरोधे द्वैतयुद्धं प्रपन्ने
भुवनजयविधानं साध्यमार्यैं र्मनुष्यैः ।
स्वहृदयमतिमात्रं पङ्किलं कण्टकार्त्या
जनयतु वरपद्मं विश्वतोषं सुरक्तम् ।। २६४

( ततः प्रविशति राहुलं करेण धृत्वा यशोधारा )

यशोधारा ।—नमामि विश्वप्राणेशं तथागतम् !

सिद्धार्थः ।—अपि धर्मकामस्ते वर्धते सुचरिते ?

यशोधारा । ( सकरुणस्मितम् )—कामा मे सर्वे तिरोहिताः । धर्मो हि निःसपत्नं शरणम् । बोधिप्राप्तस्य नित्यं हि कुशलं मन्ये ।

सिद्धार्थः । ( सस्मितम् )—अथ किम् । आवयोस्तनयः सुदर्शनो जातः सुचरितं च तस्मै रोचत इति मे निःसंशयमनुमितम् ।

यशोधारा ।—पितुः पदाङ्कमनुसरति जातः । सन्न्यासम् आश्रयितुं च वांछति सः । भवदनुमतिम् अपेक्षते व्याकुलहृदयः ।



सिद्धार्थः ।—अलं सन्नयासिनः पितुरनुमतिग्रहणेन । तवानुमत्या हि केवलं प्रयोजनम् ।

यशोधारा ।—नास्ति प्रयोजनं ममापि अमुमत्या । पितु र्मातु र्वा विनाण्यादेशं जनः सन्नयासं ग्रहीतुं क्षमः ।—

मातुः पितुः किमु विनाऽनुमतिं प्रियायाः
सन्नयासमार्यमनुजाः सततं श्रयन्ते ।
कालात्यये मधुसखः कलकोकिलाख्यः
प्रैति स्वसद्म परमं खलु काकनीडात् ।। २६५

सिद्धार्थः । (सस्मितम्)—नाद्यापि वीताभिमाना राहुलजननी ! मम जनकस्तु नैःश्रेयसवरं दातुं नाशक्नोद् अतो मया परिव्रज्या आश्रिता ।—

सर्वं काम्यमहं ददामि ननु ते पित्रेति मे भाषितं
नैरुज्यं चिरयौवनं तनुगतं मृत्योश्च मुक्ति मया ।
जल्पन्तं हि वरत्रिकं कथमहं दास्ये तव त्वीदृशं
प्रव्रज्यां शरणं लभिष्य इति च प्रोच्यानमं तं स्मितः ।।२६६

यशोधारा ।—राहुलस्य माताऽपि न शक्ता तस्मै निर्वाणफलदं वरं प्रदातुम् । अथ तेन सन्नयास एव ग्रहणीयः । यो वै पिता स वै पुत्रः !

राहुलः ।—युवां द्वावपि मे यच्छतमनुमतिम् ।

सिद्धार्थः । (हस्तमुत्थाप्य)—मध्यममार्गे चरतु पूत्रो मे शनैः शनैः !—

भिक्षुपदं द्राङ् मण्डयसे
सञ्जयतां ते पुण्यकृतम् ।
सौख्यमपूर्वं स्वं लभसे
चिन्तय नित्यं विश्वहितम् ।। २६७



राहुलः । ( प्रणम्य )—तथागतस्य पितु र्मे नूनं फलतां ग्रास्यत्याशीर्वादः सत्वरम् । जयतु बुद्धजाया सन्तानवत्सला जननी मम !

यशोधारा ।—अहमपि बुद्धशरणं गता परिणयकालादेव ।

सिद्धार्थः । ( हस्तमुत्थाप्य )—धर्मतृष्णा ते वर्धतां भूयसा रात्रिन्दिवम् ।

यशोधारा ।—पुनरपि वन्दे भक्तवांछाकल्पतरुं बोधिद्रुमं चरन्तम् !

( ततः प्रविशति शुद्धोदनः स्खलितपदेन )

सिद्धार्थः ।—वन्दे राजर्षिं शाक्यकुलचूडामणिम् ।

शुद्धोदनः ।—त्वं हि विश्ववन्दनीयो जातः क्षीणधर्मस्य पितुरपि अर्चनीयः ।

सिद्धार्थः ।—मैवं वक्तव्यं पितः ! मम जीवनम् इहजन्मनि तवैव दानं यज्जीवनम् उत्सृष्टं विश्वार्तिनाशाय ।

शुद्धोदनः ।—नाद्यापि चलितं मया स्वपुत्रनिर्दिष्टेन श्रेयोमार्गेण । ईदृशं चिन्तनं क्लिश्नाति मामहर्निशम् अनुशोचनाविद्धम् ।

सिद्धार्थः ।—नास्ति कारणं शोकस्य ।—

उत्तिष्ठतां हि प्रगतात्मचिन्तः
क्षेमे प्रभूते चिरधर्मवृत्त्या ।
जीवस्य हर्षो भविता स्वमोदः
शान्तिश्च लभ्या परमं मनोज्ञा ।। २६८

शुद्धोदनः ।—कुत्र शान्ति र्मे पुत्रविरहितस्य पापबुद्धेः ?

सिद्धार्थः ।—

मनसा कर्मणा वाचा पापं त्यक्त्वा प्रवर्धसे ।
चिरं सौख्यं भवेदत्र पुनर्जन्म न विद्यते ।। २६९

शुद्धोदनः ।—आत्मजं मे पुण्यश्लोकं महापुरुषमेव शरणं गच्छामि चिराय ।



( ततः प्रविशति आनन्दः )

आनन्दः ।—नमो महाभागाय ! नमामि महाराजं वन्दे च देवीं यशोधाराम् । अपि कुशली त्वं वत्स राहुल ?

राहुलः ।—पित्रा पुनर्मिलनात् सर्वं कुशलं मम ।

सिद्धार्थः ।—भ्रातरानन्द ! परमानन्दः प्राप्तो मया यन्मे जनको महाराजो भिक्षुत्वं श्रयते द्रागेव ।

आनन्दः ।—सर्वे भिक्षवो परां मुदां लभन्ते एतत्सन्देशात् । भगवतः सन्निधौ च राजर्षे र्दुःखतमो निःशेषेण विनश्यति ।

सिद्धार्थः ।—सखे आनन्द ! आत्मदीपो भव । सर्वे भदन्ता भवन्तु आत्मप्रदीपाः । दुःखार्णवे संसारे निजशरणं गच्छन्तु मानवाः । सत्यमेव श्रेष्ठज्योति स्तमसाच्छन्ने जगति । सत्यमेव जयते सम्पत्तौ च विपत्तौ च ।—

निर्वाणं लभ्यं निखिलमनुजै र्यद्यपि क्षेमकाङ्क्षै-
रज्ञानान्धाः स्युः परकरधृताः खंजवन्निःसहायाः ।
सन्मार्गामोदाः सुगतमतय स्त्वात्मदीपा भवेयु-
र्लक्ष्यं सङ्केतै र्न पथि सरणं शिक्षकन्ते प्रबुद्धाः ।।२७०

बुद्धोऽपि स्वयं न चिरशरणम् ।—

मच्छिष्येषु भविष्यन्ति य एवात्मप्रदीपनाः ।
नित्यं जेष्यन्ति ते सर्वे सत्यव्रता विपश्चितः ।।२७१

शुद्धोदनः ।—वत्स आनन्द ! सर्वार्थसिद्ध स्तथागतः परमं स्निह्यति त्वयि ।

आनन्दः ।—धन्योऽहं बुद्धदेवस्य स्नेहपात्रं पार्श्वचरश्च ।



शुद्धोदनः ।——अत्र मे प्रियस्नुषा पतिविरहाद् यौवनेऽपि वैराग्यशोभि कोषेयं धृतवती एकाहारी पेशलवती भूमितलशयना सुचिरमास्ते ।—

नृपात्मजा मे गृहमण्डना वधूः
स्थिता च मूर्ध्नि स्वगुणै र्हि योषिताम् ।
पतिव्रतेयं सुतसौख्यजीवना
विरागभूषां विदधाति यौवने ।।२७२

सिद्धार्थः ।——किमत्र चित्रं महाराज ! कैशोरेऽपि सा संयमव्रताऽऽसीद् अधुना तु परिणतधीः पुत्रवती सन्न्यासिनश्च धर्मपत्नी ।—

धर्मोपजोषा खलु सा शुचिस्रग्
बाल्याद्विराजे रुचिसंयमार्चा ।
तिथ्यां चतुर्थ्यामपि चन्द्रकान्तिः
स्वार्चिं स्तनोति स्रुतचन्दनाक्तम् ।।२७३

यशोधारा ।——(स्वगतम्) हृदय मा वैक्लव्यं गच्छ ! स्त्रीकृताऽहं तथागतेन धर्मपत्नीरूपेण ।

शुद्धोदनः ।—सपुत्रा सा भिक्षुत्वं काङ्क्षते तथागताशीर्वादं च ।

सिद्धार्थः ।—भगिनि स्वस्ति ते ! स्वस्ति मे वरपुत्राय ! परमा प्रीति र्लब्धा मयाऽद्य । आर्ये !—

पिता भिक्षु स्तथा पुत्रो भिक्षुणी तस्य जन्मदा ।
भिक्षोर्हि गौतमस्याद्य भिक्षवः सर्वबान्धवाः ।।२७४

शुद्धोदनः ।——आदिश पुत्र किमन्यत् प्रियं प्रसाधयानि तवेति ।

सिद्धार्थः ।—(सस्मितम्) अतः परं किं खलु प्रेयः स्यात् ! इदमस्तु तथापि—



(भरतवाक्यम्)

भूयासु र्निजलौकिकार्थविमुखा हिंसाप्रमुक्ता जनाः
संसारे विकिरन्तु जीवशुभदं पुण्यस्रवं पुष्करम् ।
निर्वाणं दृढसाधनार्जितमिह प्राप्णोतु रोचिष्मनाः
शोकाब्धौ मणिपद्मवन्नरसुखं देदीप्यतां भास्वरम् ।।२७५

ॐ शान्तिः ! ॐ शान्तिः ! ॐ शान्तिः !

( जवनिकापातः )

—इति अष्टमोऽङ्कः पुनर्मिलनं नाम—

।। समाप्तमिदं नाटकं सिद्धार्थचरितम् ।।






| श्लोकाङ्कः | | वृत्तम् | श्लोकाङ्कः | | वृत्तम् |
|---|---|---|---|---|---|
| निवेदनम् | .. | इन्द्रवज्रा | १४ | .. | अनुष्टुभ् |
| मुखबन्धः | .. | शार्दूलविक्रीडितम् | १५ | .. | कलहंसः |
| १ | .. | स्रग्धरा | १६ | .. | रथोद्धता |
| २ | .. | कुसुमलतावेल्लिता | १७ | .. | वसन्ततिलकम् |
| ३ | .. | मञ्जुभाषिणी | १८ | .. | नन्दिता* |
| ४ | .. | विश्वङ्कमाला | १९ | .. | स्रग्विणी |
| ५ | .. | स्रग्विणी | २० | .. | नन्दिनी* |
| ६ | .. | मधुमती* | २१ | .. | वेणुमती* |
| ७ | .. | चलोर्मिका* | २२ | .. | मन्दाक्रान्ता |
| ८ | .. | गीतिकल्पा* | २३ | .. | मणिमाला |
| ९ | .. | उपेन्द्रवज्रा | २४ | .. | वंशस्थविलम् |
| १० | .. | अनुष्टुभ् | २५ | .. | मञ्जुभाषिणी |
| ११ | .. | शशगतिः* | २६ | .. | अनुष्टुभ् |
| १२ | .. | वंशस्तनितम् | २७ | .. | रुचिरा |
| १३ | .. | उपेन्द्रवज्रा | २८ | .. | मालिनी |



| श्लोकाङ्कः | वृत्तम् |
|---|---|
| २९ | हंसपदिका* |
| ३० | रुचिरा |
| ३१ | सुमधुरा |
| ३२ | अनुष्टुभ् |
| ३३ | मेघविस्फूर्जिता |
| ३४ | तरस्विनी* |
| ३५ | चित्रलेखा |
| ३६ | हरिणी |
| ३७ | शिखरिणी |
| ३८ | अनुष्टुभ् |
| ३९ | उपचित्रम् |
| ४० | शिखरिणी |
| ४१ | मालिनी |
| ४२ | नाराचः |
| ४३ | तूणकम् |
| ४४ | वैश्वदेवी |
| ४५ | इन्द्रवज्रा |
| ४६ | वासन्ती |
| ४७ | सुवदना |
| ४८ | पृथ्वी |
| ४९ | तूर्यनादः* |
| ५० | शार्दूलललितम् |
| ५१ | कलहंसः |
| ५२ | अपराजिता |
| ५३ | शार्दूलविक्रीडितम् |
| ५४ | कुसुमलतावेल्लिता |
| ५५ | अनुष्टुभ् |
| ५६ | मणिमध्यम् |
| ५७ | मन्दाक्रान्ता |
| ५८ | विषमवृत्तम् |
| ५९ | नवशशिरुचिः* |
| ६० | वंशपत्रपतितम् |
| ६१ | नन्दनम् |
| ६२ | जयन्तिका* |
| ६३ | यन्त्रिणी* |
| ६४ | मञ्जरिणी* |
| ६५ | इन्द्रधनुः* |
| ६६ | मणिमध्या |
| ६७ | अनुष्टुभ् |
| ६८ | गीताञ्जलिः* |
| ६९ | चन्द्रवर्त्म |
| ७० | उपेन्द्रवज्रा |
| ७१ | प्रहर्षिणी |
| ७२ | पादाकुलिका* |
| ७३ | शार्दूलविक्रीडितम् |
| ७४ | पञ्चचामरम् |
| ७५ | मन्दारिका* |
| ७६ | काणिनी |
| ७७ | पादाकुलकम् |
| ७८ | चित्रम् |
| ७९ | मध्यक्षामा |
| ८० | अनुष्टुभ् |
| ८१ | आर्याकल्पा* |
| ८२ | अनुष्टुभ् |
| ८३ | पादाकुलकम् |
| ८४ | शार्दूलविक्रीडितम् |
| ८५ | शिखरिणी |
| ८६ | रत्नद्युतिः* |
| ८७ | मत्ता |
| ८८ | क्रन्दितम्* |



| श्लोकाङ्कः | | वृत्तम् | श्लोकाङ्कः | | वृत्तम् |
|---|---|---|---|---|---|
| ८९ | ... | पुष्पिताग्रा | ११९ | ... | रुचिरा |
| ९० | ... | पादाकुलकम् | १२० | ... | उपचित्रम् |
| ९१ | ... | शार्दूलविक्रीडितम् | १२१ | ... | मन्दाक्रान्ता |
| ९२ | ... | अनुष्टुभ् | १२२ | ... | मणिमाला |
| ९३ | ... | उपेन्द्रवज्रा | १२३ | ... | वियोगिनी |
| ९४ | ... | सुमधुरा | १२४ | ... | शार्दूलविक्रीडितम् |
| ९५ | ... | गीतिमञ्जुला* | १२५ | ... | क्षमा |
| ९६ | ... | मन्दाक्रान्ता | १२६ | ... | श्लथक्रमा * |
| ९७ | ... | शालिनी | १२७ | ... | वंशस्थविलम् |
| ९८ | ... | मालिनी | १२८ | ... | मणिनलिनम् * |
| ९९ | ... | स्वागता | १२९ | ... | सुमधुरा |
| १०० | ... | पञ्चचामरम् | १३० | ... | मधुस्रवः* |
| १०१ | ... | अनुष्टुभ् | १३१ | ... | वसन्ततिलकम् |
| १०२ | ... | चन्द्रकान्तम्* | १३२ | ... | सुरसा |
| १०३ | ... | शिञ्जिनीझङ्कृतम्* | १३३ | ... | मन्दाक्रान्ता |
| १०४ | ... | नान्दीमुखी | १३४ | ... | भूजङ्गप्रयातम् |
| १०५ | ... | गीतिरूपा* | १३५ | ... | तोटकम् |
| १०६ | ... | नर्तनम्* | १३६ | ... | शार्दूलविक्रीडितम् |
| १०७ | ... | हरिणप्लुता | १३७ | ... | पृथ्वी |
| १०८ | ... | मन्दाक्रान्ता | १३८ | ... | वातोर्मी |
| १०९ | ... | अनुष्टुभ् | १३९ | ... | अनुष्टुभ् |
| ११० | ... | मणिमध्या | १४० | ... | हास्योच्छला* |
| १११ | ... | रावीन्द्रिकम्* | १४१ | ... | कल्पलतिका * |
| ११२ | ... | उपजातिः | १४२ | ... | लघुवृत्तम् * |
| ११३ | ... | लघूर्मिका * | १४३ | ... | मन्दाक्रान्ता |
| ११४ | ... | वंशस्तनितम् | १४४ | ... | कुसुमलतावेल्लिता |
| ११५ | ... | उपेन्द्रवज्रा | १४५ | ... | जलधरमाला |
| ११६ | ... | प्रहरणकलिका | १४६ | ... | वल्लभास्यम् * |
| ११७ | ... | वसन्ततिलका | १४७ | ... | नूपुरनिक्वणम् * |
| ११८ | ... | भुजङ्गप्रयातम् | १४८ | ... | पञ्चचामरम् |



| श्लोकाङ्कः | | वृत्तम् | श्लोकाङ्कः | | वृत्तम् |
|---|---|---|---|---|---|
| २०९ | ... | मञ्जुभाषिणी | २३९ | ... | अनुष्टुभ् |
| २१० | ... | इन्द्रवज्रा | २४० | ... | शालिनी |
| २११ | ... | रुचिरा | २४१ | ... | उपेन्द्रवज्रा |
| २१२ | ... | मिलिताक्षरा * | २४२ | ... | मालिनी |
| २१३ | ... | माल्यवान् * | २४३ | ... | वह्निवर्त्म * |
| २१४ | ... | भुजङ्गप्रयातम् | २४४ | ... | चित्ररथः * |
| २१५ | ... | वन्दनम् * | २४५ | ... | इन्दुवदना |
| २१६ | ... | शशिकला | २४६ | ... | केसरिणी |
| २१७ | ... | शार्दूलविक्रीडितम् | २४७ | ... | तुरङ्गमा * |
| २१८ | ... | शार्दूलविक्रीडितम् | २४८ | ... | हरिणी |
| २१९ | ... | शार्दूलविक्रीडितम् | २४९ | ... | इन्द्रवज्रा |
| २२० | ... | शार्दूलविक्रीडितम् | २५० | ... | अनुष्टुभ् |
| २२१ | ... | अनुष्टुभ् | २५१ | ... | दम्भोलिः* |
| २२२ | ... | अनूष्टुभ् | २५२ | ... | अनुष्टुभ् |
| २२३ | ... | मयूरसारिणी | २५३ | ... | मणिमध्या |
| २२४ | ... | मेघविस्फूर्जिता | २५४ | ... | कुरङ्गमा * |
| २२५ | ... | वसन्ततिलका | २५५ | ... | कुसुमलतावेल्लिता |
| २२६ | ... | वैश्वदेवी | २५६ | ... | अनुष्टुभ् |
| २२७ | ... | अनुष्टुभ् | २५७ | ... | रंरण्यितम् * |
| २२८ | ... | मन्दाक्रान्ता | २५८ | ... | अनुष्टुभ् |
| २२९ | ... | सुरोचना * | २५९ | ... | द्वैतानुष्टुभ् |
| २३० | ... | इन्द्रवज्रा | २६० | ... | इन्द्रवज्रा |
| २३१ | ... | मधुपगुञ्जनम् * | २६१ | ... | अनुष्टुभ् |
| २३२ | ... | दीपरश्मिः * | २६२ | ... | उपेन्द्रवज्रा |
| २३३ | ... | मेघविस्फूर्जिता | २६३ | ... | वंशपत्रपतितम् |
| २३४ | ... | अनुष्टुभ् | २६४ | ... | मालिनी |
| २३५ | ... | अन्तःस्मिता * | २६५ | ... | मितभाषिणी* |
| २३६ | ... | अनुष्टुभ् | २६६ | ... | शार्दूलविक्रीडितम् |
| २३७ | ... | चित्रलेखा | २६७ | ... | मणिमध्या |
| २३८ | ... | स्रग्धरा | २६८ | ... | इन्द्रवज्रा |



| श्लोकाङ्कः | | वृत्तम् |
|---|---|---|
| २६९ | ... | अनुष्टुभ् |
| २७० | ... | कुसुमलतावेल्लिता |
| २७१ | ... | अनुष्टुभ् |
| २७२ | ... | वंशस्थविलम् |

| श्लोकाङ्कः | | वृत्तम् |
|---|---|---|
| २७३ | ... | इन्द्रवज्रा |
| २७४ | ... | अनुष्टुभ् |
| २७५ | ... | शार्दूलविक्रीडितम् |

